एते भेदाश्चतुष्षष्टिरनुरागस्य नामतः ।
उदाहरणमालैषां रूपव्यक्त्यै निदर्श्यते ॥

१. तत्र अभिलाषो यथा—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ १

२. आकाङ्क्षा यथा—

(1)एक्कक्कमसंदेसाणुराअवड्ढंतकोउहल्लाइं ।
दुक्खं असमत्तमणोरहाइ अच्छंति मिहुणाइ ॥ २

३. अपेक्षा यथा—

(2)गेह्णह पलोअह इमं पहसिअवअणा पइस्स अप्पेइ ।
जाआ सुअपढमुब्भिण्णदंतजुअलंकिअं बोरं ॥ ३

४. उत्कण्ठा यथा—

(3)जं जं सो णिज्झाअइ अंगोआसं महं अणिमिसच्छो ।
पच्छाएमि अ तं तं इच्छमि अ तेण दीसंतं ॥ ४

*५–६–७.

८. वाञ्छा यथा—

(4)वाञ्छाधौलिं करेउ जं जइ वेढवेल्लिअगणीए ।
वाअग्गंभुट्टुक्खित्तणीसहंगीए वि णइ . . . ॥ ५

---

(1) अन्योन्यसन्देशानुरागवर्धमानकौतूहलानि । दुःखमसमाप्तमनोरथानि तिष्ठन्ति मिथुनानि ॥

(2) गृह्णीत प्रलोकयत इमं प्रहसितवदना पत्युरर्पयति । जाया सुतप्रथमोद्भिन्नदन्तयुगलाङ्कितं बदरं ॥

(3) यं यं स निध्यायति अङ्गावकाशं ममानिमिषाक्षः । प्रच्छादयामि च तं तं इच्छामि च तेन दृश्यमानम् ॥

* अत्र अनुरागभेदेषु ५. ईप्सा ६. लिप्सा ७. इच्छा एतेषां त्रयाणं उदाहरणपद्यानि गलितानि ॥

(4) इयं गाथा अस्फुटा ॥

९. तृष्णा यथा—

[1]अविअह्णपेच्छणिज्जेण तक्खणं मामि तेण दिट्ठेण ।
सिविणअपीएण व पाणिएण तण्हच्चिअ ण फिट्ठा ॥ ६

१०. लालसा यथा—

[2]घडिऊरुसंपुडं णववहूए जहणं वरो पुळोएइ ।
संदट्ठणवकपाडं दारं पिव सग्गणअरस्स ॥ ७

११. स्पृहा यथा—

[3]कस्स करो बहुपुण्णप्फळेक्कतरुणो तुहं विसंमिहइ ।
थणपरिणाहे वंमहणिहाणकळसेव्व पारोहो ॥ ८

१२. लौल्यं यथा—

[4]जं चिअ वि पिआणणा विअ मस्स ळोळइ सहि मुहे दिट्ठी ।
ळीळं रहस्सबहुळं सहो विअरेइ कामस्स ॥ ९

१३. गर्धा यथा—

[5]धरिउं कह.णतीकइ हअदिट्ठी वळ्ळहेसु णिपडंति ।
गाइव्व हारहाई सरसे जुववळ्ळरे ळुद्धा ॥ १०

१४. श्रद्धा यथा—

[6]सद्धा मे तुज्झ पिअत्तणस्स कह तंति. ण आणामो ।
दे पसिअ तुमं चिअ सिक्खवेसु जहए पिआ होमि ॥ ११

१५. रुचिर्यथा—

[7]बाळाओ गोंतिकोऊहळेण एमेअ पविळचिंताओ ।
दाळहसिअधणीसु पुणो णिवसइ मअरद्धअरहस्सो ॥ १२

---

(1) अवितृष्णप्रेक्षणीयेन तत्क्षणं मामि तेन दृष्टेन । स्वप्नपीतेनेव पानीयेन तृष्णैव न नष्टा ॥

(2) घटितोरुसंपुटं नववध्वा जघनं वरः प्रलोकयति । सन्दष्टनवकवाटं द्वारमिव स्वर्गनगरस्य ॥

(3) कस्य करो बहुपुण्यफलैकतरोस्तव विश्रामिष्यति । स्तनपरिणाहे मन्मथनिधानकलश इव प्ररोहः ॥

(4—5) अस्फुटं गाथाद्वयं.

(6) श्रद्धा मे तव प्रियत्वस्य कथं तादिति न जानीमः । तत् प्रसीद त्वमेव शिक्षय यथा प्रिया भवामि ॥

(7) बालाः.....कौतूहलेन एवमेव.....चिन्ताः । ......हासित......पुनः निवसाति मकरध्वजरहस्यम् ॥

१६. दोहदो यथा—

(1)किं किं दे पडिहासइ सहीहि इअ पुच्छिआए मुद्धाए ।
पडमुल्ळअदोहळिणिए णवरं दइअं गआ दिट्ठी ॥ १३

१७. आशा यथा—

(2)णीआइ अज्ज णिक्किव पिणद्धणवरङ्गए वराईए ।
घरपरिपाडीअ पहेणआइ तुह दंसणासाए ॥ १४

१८. आशीर्यथा—

जनः पुण्यैर्यायाज्जलधिजलभावं जलमुचः
तथावस्थं चैनं निदधतु शुभैः शुक्तिवदने ।
ततस्तां श्रेयोभिः परिणतिमसौ विन्दति यया
रुचिं तन्वन् पीनस्तनि हृदि तवायं विलुठति ॥ १५

१९. आशंसा यथा—

(3)होज्जवणे सो दिअरहा जड़ वि आमाळिआ कुसुमधम्मिळ्ळा ।
पत्ते रआवसाणे पुच्छिज्ज पवासदुक्खाइं ॥ १६

२०. मनोरथो यथा—

यथा श्रुतं वेदविदां वर त्वया
जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते ॥ १७

२१. आस्था यथा—

सद्मनां विरचनाहितशोभै
रागतः प्रियकथैरपि दूत्यम् ।

---

(1) किं किं ते प्रतिभासते सखीभिरिति पृष्टाया मुग्धायाः । प्रथमोद्गतदोहदिन्याः केवलं दयितं गता दृष्टिः ॥

(2) नीतानि अद्य निष्कृप पिनद्धनवरङ्गकया वराक्या । गृहपरिपाट्या प्रहेणकानि तव दर्शनाशया ॥

(3) ............................................कुसुमधम्मिल्ला । प्राप्ते रतावसाने पृच्छति प्रवासदुःखानि ॥

सन्निकृष्टरतिभिस्सुरदारै
भूषितैरपि विभूषणमीषे ॥ १८

२२. अभिनिवेशो यथा —

[1]ळोओ जूरइ जूरउ वआणिज्जं होइ होउ तं णाम ।
एहि णिमज्जसु पासे पुप्फवइ ण एइ मे णिद्दा ॥ १९

२३. अनुबन्धो यथा —

[2]गह्णइ कंठम्मि बला चुंबइ णअणाइ हरइ मे सिअअं ।
पढमसुरअम्मि रअणी परस्स एमेअ बोळेइ ॥ २०

२४. आग्रहो यथा —

[3]अज्ज मए गंतव्वं घणंधआरे वि तस्स सुहअस्स ।
अज्जा णिमीळअच्छी पअपरिवाडिं घरे कुणइ ॥ २१

२५. विमर्शो यथा —

कास्विदवकुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव भाति पाण्डुपत्राणाम् ॥ २२

२६. मनीषा यथा —

असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥ २३

---

(1) लोकः खिद्यति खिद्यतु वचनीयं भवति भवतु तन्नाम । एहि निषीद पार्श्वे पुष्पवति नैति मे निद्रा ॥

(2) गृह्णाति कण्ठे बला 'बति नयने हरति मे सिचयं । प्रथमसुरते रजनी परस्य एवमेवापक्रामति ॥

(3) अद्य मया गन्तव्यं घनान्धकारेऽपि तस्य सुभगस्य । आर्या निमीलिताक्षी पदपरिपाटीं गृहे करोति ॥

२७. अभिप्रायो यथा—

(1)बालअ रे वंचिज्जसि ळोळिरमहुआणसद्धपसराओ ।
पुप्फवईमुहचुंबणसहासकंठग्गहसुहाओ ॥ २४

२८. पक्षपातो यथा—

(2)वीसंभवड्ढिअरसं अइराअक्खलिअसेससंठिअरसणं ।
विअळिअमअपत्तट्ठं पच्चूसरअं पओसदूरब्भहिअं ॥ २५

२९. लोभो यथा—

(3)हुं हुं दे भणसु पुणो ण सुअंति करेइ काळविक्खेवं ।
घरिणी हिअअसुहाइं पइणो कण्णे भणंतस्स ॥ २६

३०. आसङ्गो यथा—

सन्तापसन्ततिमहाव्यसनाय तस्या
मासक्तमेतदनपेक्षितहेतु चेतः ।
प्रायश्शुभं च विदधात्यशुभं च जन्तोः
सर्वंकषा भगवती भवितव्यतैव ॥ २७

३१. अभिष्वङ्गो यथा—

(4)दढमूढबद्धगंठिं व मोइआ कहवि तेण मे बाहू ।
अह्मे विअ तस्सउरे खत्तव्व समुक्खआ धणआ ॥ २८

३२. सात्त्विर्यथा—

(5)का..क्खरदूसिक्खिअ बाळअ रे एहि ळग्ग कंठंमि ।
दो वि ण अणिवासो सामअ? जइ होइ ता होइ ॥ २९

---

(1) बालक रे वञ्च्यसे लोलितमधुपानश्रद्धा प्रसरात् । पुष्पवतीमुखचुंबनसहासकण्टग्रहसुखात् ॥

(2) विस्रंभवार्धितरसं अतिरागस्खालितशेषसंस्थितरशनं । विगलितमदेन निपुणं प्रत्यूषरतं प्रदोषदूराभ्याधिकं ॥

(3) हुं हुं हेभण पुनः न ज्ञातमिति करोति कालविक्षेपं । गृहिणी हृदयसुखानि पत्युः कर्णे भणतः ॥

(4) दृढमूढबन्धग्रन्थी इव मोचितौ तेन कथमपि मे बाहू । अस्माभिरपि तस्योरासि खात इव समुत्खातौस्तनौ ॥

(5) ............दुश्शिक्षित बालक रे एहि लग कण्ठे । द्वयोरपि............यदि भवति तद्भवतु ॥

३३. मोहो यथा—

(1)णीसासुक्कंपपुळोइएहिं जाणंति णच्चिउं धण्णा।
अंमारिसाण दिट्ठे पिअंमि अप्पा वि पम्हसइ॥ ३०

३४. आकूतं यथा—

(2)ता छिवइ ता णिअच्छइ ता कुणइ रअंमि ताव चुंबेइ।
अंगेहि कीरइ पई कामोच्चवसीअळो तिस्सा॥ ३१

३५. कुतूहलं यथा—

(3)असमत्तमंडणं च्चिअ वच्च घरं से सकोउहळ्ळस्स।
बोळाविअहळहळअस्स पुत्ति चित्ते ण लग्गिहिसि॥ ३२

३६. विस्मयो यथा—

कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायाम्।
सापि सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥ ३३

३७. रागो यथा—

(4)घरिणिघणत्थणपेळ्ळण सुहेळिळपडिअस्स होंतपहिअस्स।
अवसउणंगारअवारविट्ठिदिअहा सुहावेंति॥ ३४

३८. वेगो यथा—

(5)जाणामि जणो णिउणो गुरुअणमज्झम्मि संठिआ अ अहं।
ता किं करेमि पिअसहि धरिआ वि बळा वळइ दिट्ठी॥ ३५

३९. अध्यवसायो यथा—

समानप्रेमाणं जनमसुलभं प्रार्थितवतो
विधौ वामारंभे मम समुचितैषा परिणतिः।

---

(1) निश्वासोत्कंपितप्रलोकितैर्जानन्ति नर्तितुं धन्याः। अस्मादृशां दृष्टे प्रिये आत्मापि विस्मर्यते॥

(2) तावत् स्पृशति तावन्नियच्छति तावत्करोति रते तावच्चुंबति। अंगैः...पतिः कामोत्सवशीतलस्तस्याः॥

(3) असमाप्तमण्डनैव व्रज गृहं तस्य सकौतूहलस्य। अपक्रमितानुरागस्य पुत्रि चित्ते न लगिष्यासि॥

(4) गृहिणीघनस्तनप्रेरणसुखकेलिपतितस्य भाविष्यत्पथिकस्य। अपशकुनाङ्गारकवार विष्टि दिवसास्सुखयन्ति॥

(5) जानामि जनो निपुणो गुरुजनमध्ये संस्थिता चाहं। तत्किं करोमि प्रियसखि धृतापि बलाद्वलते दृष्टिः॥

तथाप्येवं निन्दाश्रवणसमयेऽस्याः प्रविगल-
त्प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥ ३६

४०. व्यवसायो यथा—

(1)तस्स अ सोहग्गगुणं अमहिळसरिसं अ साहसं मज्झ ।
जाणइ गोळाऊरो वासारत्तद्धरत्तो अ ॥ ३७

४१. कामना यथा—

(2)अच्छीहिं चिअ सा तेण पिअमाणेह णिब्भरमणेण ।
आहासिअं व दोहिअव्व रमिअरमिअवच्चीअंब ॥ ३८

४२. वासना यथा—

(3)आणिअपुळउब्भेओ सवत्तिपणअपडिपूरणंमि वि गरुए ।
पिअदंसणे पवट्टइ मंतुट्ठाणे वि रुप्पिणीए पहरिसो ॥ ३९

४३. स्मरणं यथा—

(4)म्हरिमो से सअणपरंमुहीए विअळंतमाणपसराए ।
कइअवसुत्तुव्वत्तणथणकलसप्पेळ्ळणसुहेल्लिं ॥ ४०

४४. सङ्कल्पो यथा--

*विहिते कारागारे मनसि ससूचीमुखाग्रनिर्भेद्यम् ।
अपिच निमीलितनयने तथापि कान्ताननं व्यक्तम् ॥ ४१

---

(1) तस्य च सौभाग्यगुणं अमहिलासदृशं च साहसं मम । जानाति गोदापूरो वर्षारात्रार्धरात्रश्च ॥

(2) अस्फुटा गाथा । [प्रहर्षः ॥

(3) आनीतपुलकोद्भेदस्सपत्नीप्रणयप्रतिपूरणेपि गुरुणि । प्रियदर्शने प्रवर्तते म(न्तु)न्युस्थानेऽपि रुक्मिण्याः

(4) स्मरामस्तस्याश्शयनपराङ्मुख्या विगलन्मानप्रसरायाः । कैतवसुप्तोद्वर्तनस्तनकलशप्रेरण सुखकेलिम् ॥

* पिहिते कारागारे तमसि च सूचीमुखाग्रनिर्भेद्ये । मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम् ॥
—इति साधुःपाठः ॥

*४५. भावो यथा—

(1)दिट्ठे जं पुळइज्जसि थरहरसि पिअंमि जं समासण्णे ।
तह संभासणसेउल्लिळ फंसणे किं वि ळज्जिहिसि ॥ ४२

४६. रागो यथा —

(2)तह तीए सुहरसो पहरिसो अ मुहपंकअंमि पप्फुरिओ ।
समअं जह वि असिअमोल्लिळआइ जाआइ अच्छीइ ॥ ४३

४७. रतिर्यथा —

(3)अच्छेरं व णिहिं विअ सग्गे रज्जं व अमअपाणं व ।
आसि मह तं मुहुत्तं विणिअंसणदंसणं तिस्सा ॥ ४४

४८. प्रीतिर्यथा —

(4)अविहाविअक्खरवआ चिरेण अणुबंधपुच्छिअपळत्ता ।
णववहुपडमुल्लावा वरस्स हिअए ण माएंति ॥ ४५

४९. दाक्षिण्यं यथा—

(5)णववहुपेंमतणुइओ पणअं पढमघरिणीए रक्खन्तो ।
अळिहिअदुप्परिअल्लं पि णेइ रण्णं धणुं वाहो ॥ ४६

---

(1) दृष्टे यत्पुलकिष्यसि थरथरसि प्रिये यत्समासन्ने । तथा संभाषणस्वेदार्द्रे स्पर्शने किमपि लज्जिष्यसे ॥

(2) तथा तस्याः सुखरसः प्रहर्षश्च मुखपङ्कजे प्रस्फुरितः । समयं यथा...........आर्द्रे जाते अक्षीणी ॥

(3) आश्चर्यमिव निधिमिव स्वर्गे राज्यमिव अमृतपानमिव । आसीन्मम तन्मुहूर्तं विनिवसनदर्शनं तस्याः ॥

(4) अविभाविताक्षरवचनः चिरेण अनुबन्धपृष्ट....... । नववधूप्रथमोल्लापा वरस्य हृदये न मान्ति ॥

(5) नववधूप्रेमतनूकृतः प्रणयं प्रथमगृहिण्या रक्षन् । अलिखितदुराकर्षमपि नयत्यरण्यं धनुर्व्याधः ॥

---

* २ पृष्ठे अभिलाषादीनां नामोद्देशपरिपाट्यां रतिः ४५ त्वेन, प्रीतिः ४६ त्वेन निर्दिष्टे। भावः ५३ त्वेन, रागः ५४ त्वेन समुल्लिखितौ स्तः । उदाहरणानुक्रमण्यां पुनरत्र भावो रागश्च ४५, ४६ त्वेन निवेशितौ उदाहृतौ च, रतिप्रीती तु ४७-४८ त्वेन निवेश्य अन्यत्सर्वं उपरितनं प्रभेदजातं यथोद्देशं समसाध्यत. उदाहरणगाथानां समन्वयः सुधीभिरूह्यः । अभिलाषादिनिर्वृत्यन्तेषु ६४ अनुरागप्रभेदेषु " रागः " इत्यभिन्नाक्षरं नाम ३८ तमायां ४६ तमायां च सङ्ख्यायां द्विवारं लिखितं दृश्यते । तत् सूक्ष्मधियो विभावयन्तु. अस्य प्रबन्धस्य एकमातृकतया यथोपलंभं निवेशितान्यक्षराणि ।

५०. अनुग्रहो यथा—

[1]खिण्णस्स उरे पइणो ठवेइ गिम्हावरण्हरमिअस्स।
ओल्लं गळंतपुप्पं ण्हाणसुअंधं चिहुरभारं॥ ४७

५१. वात्सल्यं यथा—

[2]झत्ति समुट्ठिअमणहरिसिरिवअणविलाससंभमाउळिअं।
भुअजुअळगहिअणिप्पंदमंदरं णमह महुमहणं॥ ४८

५२. अनुक्रोशो यथा—

[3]गज्ज महच्चिअ उअरिं सव्वत्थामेण ळोहहिअअस्स।
जळहर ळंबाळइअं मा रे मारेहिसि वराइं॥ ४९

५३. विश्वासो यथा—

[4]केळीगोत्तक्खळणे वरस्स दुटठुळ्ळ....रदीहिं देइ।
बहुवासअवासहरे वहूए वाहुल्लिआ दिटठी॥ ५०

५४. विस्रम्भो यथा—

[5]समअणणअणाळोअणसच्चविअण्णोण्णमणहरा(ळा)आवो।
पच्चूसरअविळासो वीसंभं कहइ मिहुणाण॥ ५१

५५. वशीकारो यथा—

[6]साळोए च्चिअ सूरे घरिणी घरसामिअस्स घेत्तूण।
णेच्छंतस्स वि पाए धुअइ हसंती हसंतस्स॥ ५२

---

(1) खिन्नस्योरसि पत्युस्स्थापयति ग्रीष्मापराण्हरमितस्य। आर्द्रं गलत्पुष्पं स्नानसुगन्धं चिकुरभारम्॥

(2) झटिति समुत्थितमनोहरश्रीवदन विलाससंभ्रमाकुलितं। भुजयुगळगृहीतनिष्पन्दमन्दरं नमत मधुमथनं॥

(3) गर्ज ममैवोपरि सर्वस्थाम्ना लोहहृदयस्य। जलधर लंबालकां मा रे मारयिष्यसि वराकीम्॥

(4) केलीगोत्रस्खलने वरस्य........................। बधूवासकवासगृहे वध्वा बाष्पार्द्रिता दृष्टिः॥

(5) समदननयनालोकन सत्यापितान्योन्यमनोहरालापः। प्रत्यूषरतविलासो विस्रंभं कथयति मिथुनानाम्॥

(6) सालोक एव सूर्ये गृहिणी गृहस्वामिनो गृहीत्वा। अनिच्छतोऽपि पादौ धावति हसन्ती हसतः॥

५६. प्रणयो यथा —

(1) एक्कं पहरुव्विण्णं हत्थं मुहमारुएण वीअंतो।
सो वि हसंतीएँ मएँ गहिओ बीएण कंठम्मि ॥ ५३

५७. प्राप्तिर्यथा—

(2) हंहो कण्णुल्लीणा भणामि रे सुहअ किं पि मा तूर।
णिज्जणपाणगोट्ठीसंकडम्मि पुण्णेहि लद्धोसि ॥ ५४

५८. पर्याप्तिर्यथा—

(3) एएण च्चिअ पिअसहि पज्जत्तिंति ण माणुसे लोए।
जं तस्स कए एसा किलसत्ति सव्वो जणो भणइ ॥ ५५

५९. समाप्तिर्यथा—

(4) असमत्तचित्तल............वपाउवो ससिमुहीए।
मुहअंगो पज्जंतरहमभू....सवतिडत्तमुहकुली अच्छिजुओ ॥ ५६

६०. अभिमानाप्तिर्यथा—

(5) सव्वस्सम्मि वि दड्ढे तह वि हु हिअअस्स णिव्वुदिच्चेअ।
जं तेण गामडाहे हत्थाहत्थिं कुडो गहिओ ॥ ५७

६१. स्नेहो यथा —

(6) हिअअब्भंतरपसरंतणेहरसविसरआ पुरओ।
पिअदंसणंमि दिट्ठी मंचणउणवकुदळाइ व्व ॥ ५८

(1) एकं प्रहारोद्विग्नं हस्तं मुखमारुतेन वीजयन्। सोऽपि हसन्त्या मया गृहीतो द्वितीयेन कंठे ॥

(2) हंहो........भणामि रे सुभग किमपि मा त्वर। निर्जनपानगोष्ठीसङ्कटे पुण्यैर्लब्धोऽसि ॥

(3) एतेनैव प्रियसखि ..................मानुषे लोके। यत्तस्य कृते एषा क्लिष्टेति सर्वो जनो भणति ॥

(4) असमर्थचित्त....................शशिमुख्याः। मुख..........................अक्षियुगम् ॥

(5) सर्वस्वेऽपि दग्धे तथापि (खलु) हृदयस्य निर्वृतिरेव। यत्तेन ग्रामदाहे हस्ताहस्तिकया कुटो गृहीतः ॥

(6) हृदयाभ्यन्तरप्रसरत्स्नेहरसविसरा पुरः। प्रियदर्शने दृष्टिः ......नवकु......दले इव ॥

६२. प्रेम यथा —

(1) माए कज्जा कंचो फळसंपत्तीए होंति विणिअत्ता ।
णसमप्पंति समन्ता वि दड्ढपेम्मस्स वावारा ॥ ५९

६३. आह्लादो यथा —

(2) अच्च उ ताव मणहरं पिआए मुहदंसणं अइमहग्घं ।
तग्गामछेत्तसीमा वि झत्ति दिट्ठा सुहावेइ ॥ ६०

६४. निर्वृतिर्यथा —

(3) दक्खिण्णेण वि एंतो सुहअ सुहावेसि अंह हिअआइं ।
णिक्कइअवाउरत्तो सि जाण का णिव्वुई ताणं ॥ ६१

सोऽयमनुरागः ६४ चतुष्षष्टिप्रकारोऽपि प्रतिप्रकारं अष्टाधा संभवति.

१—१. नित्यानुरागः, १—४. विशेषानुरागः, १—७. अकृत्रिमानुरागः,
१—२. नैमित्तिकानुरागः, १—५. प्रकाशानुरागः, १—८. कृत्रिमानुरागः,
१ – ३. सामान्यानुरागः, १ ६. प्रच्छन्नानुरागः इति.

तेषु १ – १. कालादिकारणविशेषानपेक्षो नित्यः १—५. स्वाङ्गनादिगोचरः प्रकाशः
१—२. तद्विपरीतो नैमित्तिकः, १—६. पराङ्गनादिविषयः प्रच्छन्नः
१—३. जातिविषयस्सामान्यः, १—७. प्रयोजननिरपेक्षोऽकृत्रिमः
१—४. व्यक्तिविषयो विशेषः १—८. तद्विपरीतः प्रयत्ननिर्वर्त्यः कृत्रिमः,

तत्र नित्यः — विषया, श्रया, लंबनो, द्दीपन, स्थान, संस्थान, रूप, स्वरूपाणां पृथक् त्रैविध्यात् २४ चतुर्विंशतिधा—तत्र अनुरागो यस्मिन्नुपजायते स विषयः, यस्य जायते स आश्रयः। यदालंबते तदालंबनम्। यदुद्दीपयति तदुद्दीपनम्। यत्र अवतिष्ठते तत् स्थानम्। येन सुश्लिष्टो भवति तत् संस्थानम्। येन शोभते तत् रूपम्। येन निरूप्यते तत् स्वरूपम्।

**तेषु १–१–१. विषयानुरागः** (क) **उच्चः**, (ख) **निम्नः**, (ग) **समः**, **इति.**
**१–१–२. आश्रयानुरागः** — (क) **उत्तमः**, (ख) **मध्यमः**, (ग) **कनीयान्**, **इति.**

---

(1) मातः...... ...फलसंपत्त्या भवन्ति विनि... । न समाप्यन्ते...समस्ता अपि दग्धप्रेम्णः व्यापाराः ॥
(2) अस्तु तावन्मनोहरं प्रियाया मुखदर्शनमतिमहार्घं । तद्ग्रामक्षेत्रसीमापि झटिति दृष्टा सुखयति ॥
(3) दाक्षिण्येनाप्यायन् सुभग सुखयस्यस्माकं हृदयानि। निष्कैतवेन रक्तोऽसि यासां का निर्वृतिस्तासाम् ॥

१–१–३. आलंबनानुरागः—(क) शीघ्रः, (ख) मध्यमः, (ग) चिरः, इति.
१–१–४. उद्दीपनानुरागः—(क) मृदुः, (ख) मध्यः, (ग) चण्डः, इति.
१–१–५. स्थानानुरागः—(क) सदृक्, (ख) विसदृशः, (ग) असदृक्षः, इति.
१–१–६. संस्थानानुरागः—(क) सम्यक्, (ख) मिथ्या, (ग) अतिशायी, इति.
१–१–७. रूपानुरागः—(क) चारुः, (ख) अचारुः, (ग) उभयात्मा, इति.
१–१–८. स्वरूपानुरागः—(क) गभीरः, (ख) उत्कटः, (ग) प्रकटः, इति.

तत्र १–१–१.(क) उच्चजातौ य उच्चजायते स उच्चः, यथा—

(1) केळीगब्भसरिच्छे ऊरू दट्ठूण हलिअसोण्हाए ।
उव्वळसइ....णहरणंचडुळस्स सेओल्लिअकरस्स ॥ ६२

१–१–१.(ख) निम्नजातौ निम्नः यथा—

(2) गोळाणई ण तूहे मोहं विअ कुरुअरंतभग्गस्स ।
सोह्अधूआमुहपेच्छिरस्स ण समप्पए संज्झा ॥ ६३

१–१–१.(ग) समजातौ समः यथा—

(3) संकेअऊसुअमणोगहवइधूआकलक्खसच्चविओ ।
तं वं गअं ण वेअइ वीडाओअं परं दुहइ । ६४

१–१–२.(क) स्त्रीपुंसयोः परस्परानुरागे उत्तमो यथा—

(4) रमिऊण पअं वि गओ जाहे उवऊहिउं पडिणिउत्तो ।
अहअं पउत्थपइए व्व तक्खणं सो पवासिव्व ॥ ६५

१–१–२.(ख) योषिदनुरागे मध्यमो यथा

(5) सा तुइ सहत्थदिण्णं अज्ज वि ओ सुहअ गंधरहिअं पि ।
उव्वसिअणअरघरदेवदव्व णोमालिअं वहइ ॥ ६६

(1) कदलीगर्भसदृक्षे ऊरू दृष्ट्वा हालिकस्नुषायाः । उल्लसति...नखरचटुलस्य स्वेदार्द्रकरस्य ॥
(2) गोदानदी..........मोघमिव....... । ....वधूमुखप्रेक्षणशीलस्य न समाप्यते सन्ध्या ॥
(3) संकेतोत्सुकमनोगृहपतिस्नुषाकटाक्षसत्यापितः ।........गतं नवेत्ति व्रीडयोगं परं.......... ॥
(4) रन्त्वा पदमपि गतो यदोपगूहितुं प्रतिनिवृत्तः । अहं प्रोषितपतिकेव तत्क्षणं स प्रवासीव ॥
(5) सा त्वया स्वहस्तदत्तामद्यापि रे सुभग गन्धरहितामपि । उद्वसितनगरगृहदेवतेव नव मालिकां वहति॥

१-१ २.(ग) पुरुषानुरागे कनीयान्, यथा—

(1)सो तुह कएण सुंदरि तह छीणो सुमहिळो हळिअउत्तो ।
जह से मच्चरिणीए वि दोच्चं जाआए पडिवण्णम् ॥ ६७

१-१-३.(क) प्रकृतिवशाज्जने शीघ्रं कालमालम्बमानः शीघ्रः, यथा—

(2)हत्थप्फंसेण जरग्गाई वि पण्हवइ दोहअगुणेण ।
अवळोइअपण्हइरी पुत्तअ दुक्खेहि पाविहिसि ॥ ६८

१-१-३.(ख) मध्यकालालम्बनो मध्यः, स यथा—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ ६९

१-१-३.(ग) चिरकालालम्बनः चिरः, स यथा

न वेद्मि स प्रार्थितदुर्लभः कदा
सखीभिरस्रान्तरवीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं
वृषेव सीतां तदवग्रहक्षताम् ॥ ७०

१-१-४.(क) रागानुगुण्यान्मृदूपक्रमो मृदुः, स यथा—

मन्दमन्दविगलत्त्रपमीष-
च्चक्षुरुल्लसितपक्ष्म दधत्या ।
वीक्ष्यते च शनकैर्नववध्वा
कामिनो मुखमधोमुखयैव ॥ ७१

---

(1) स तव कृतेन सुन्दरि तथा क्षीणस्सुमहिलो हालिकपुत्रः । यथा तस्य मत्सरिण्यापि दूत्यं जायया प्रतिपन्नम् ॥

(2) हस्तस्पर्शेन जरद्गव्यपि प्रस्नौति दोहदगुणेन । अवलोकनप्रस्नवशीलां पुत्रक दुःखैः प्राप्स्यसि ॥

१-१-४.(ख) मध्योपक्रमो मध्यः, स यथा —

लोलदृष्टि वदनं दयितायाः
चुम्बति प्रियतमे रभसेन ।
व्रीलया सह विनीवि नितम्बा-
दंशुकं शिथिलतामुपपेदे ॥ ७२

१-१-४.(ग) चण्डोपक्रमः चण्डः यथा —

धन्याः स्थ याः कथयथ प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहितश्च करः प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि ॥ ७३

१-१-५.(क) गुणाधिके पुंसि योषिति वा समुपजायमानः सदृक् यथा —

स्थाने तपो दुश्चरमेतदर्थं
अपर्णया कोमलयाऽपि तप्तम् ।
या दास्यमप्यस्य लभेत नारी
सा स्यात्कृतार्था किमुताङ्कशय्याम् ॥ ७४

१-१-५.(ख) तद्विपरीतो विसदृशः यथा —

परवत्यपरिच्छेदे कथं
कृपणेऽस्मिन्मयि कोऽयमादरः ।
मृगयस्व मृगेक्षणे कम-
प्यनुरूपं विसदृङ्न शोभते ॥ ७५

१-१-५.(ग) गुणानामेकस्य भूयस्त्वे परस्य च अल्पीयस्त्वे तत् असदृक्षः यथा —

इदमिह मदनस्य जैत्रमस्त्रं
सहजविलासनिबन्धनं शरीरम् ।

असदृशवरसम्प्रयोगशोच्यं
विफलगुणातिशयं भविष्यतीति ॥ ७६

१-१-६.(क) परस्परस्यानुरागादिसाम्ये सम्यक् यथा—

[1]समपेम्मरसं समरूपजव्वणं समविळासवेअड्ढिं ।
समसुहदुक्खं अ जणं समपुण्णो जइ जणो ळहइ ॥ ७७

१-१-६.(ख) एकस्य प्रातिकूल्ये मिथ्या यथा—

[2]अब्भत्थणं ण गेह्णइ तीरइ तिहुअणसिरीअ वि ण लोहेउं ।
ण गणेइ सरीरभअं कह मण्णे होज्ज जाणई साणुणआ ॥ ७८

१-१-६.(ग) एकस्यातिशयाधिक्ये अतिशायी यथा—

[3]दिट्ठा कुइआणुणआ पिआ सहस्सधणपेळ्ळणं वि सहिअं ।
जस्स णिसण्णाए उरे सिरीए पेम्मेण ळहुइओ अप्पाणो ॥ ७९

१-१-७.(क) वयोरूपजात्यादीनां परभागे चारुः यथा—

इन्दीवरश्यामतनुर्नृपोऽसौ
त्वं रोचनागौरशरीरयष्टिः ।
अन्योन्यशोभापरिवृद्धये वां
योगस्तटित्तोयदयोरिवास्तु ॥ ८०

१-१-७.(ख) तद्विपर्यये अचारुः, यथा—

राज्ञः प्रियाय सुहृदे सचिवाय कार्या-
द्दत्वात्मजां भवति निर्वृतिमानमात्यः ।

---

(1) समप्रेमरसं समरूपयौवनं समविलासवैदग्ध्यं । समसुखदुःखं च जनं समपुण्यो यदि जनो लभते ॥

(2) अभ्यर्थनां न गृह्णाति शक्यते त्रिभुवनश्रियापि न लोभयितुं । न गणयति शरीरभयं कथं मन्ये भवे-[ज्जानकी सानुनया ॥

(3) दृष्टा....तानुनया प्रिया सहस्रस्तनप्रेरणमपि सोढं । यस्य निषण्णाया उरसि श्रियःप्रेम्णा लघूकृत आत्मा ॥

दुर्दर्शनेन घटतामियमप्यनेन
धूमग्रहेण विमला शशिनः कलेव ॥ ८१

१-१-७.(ग) गुणदोषयोः सद्भावे उभयात्मा यथा—

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥ ८२

१-१-८.(क) अप्रकाशो गभीरः, यथा—

(1)तुह दंसणसंजणिओ इमीए ळज्जाळुईए अणुराओ ।
दुग्गअमणोरहो विअ हिअएच्चिअ जाइ परिणामं ॥ ८३

१-१-८.(ख) नातिप्रकाशोऽनुत्कटः, यथा—

अभिमुखे मयि संहृतमीक्षितं
हसितमन्यनिमित्तकृतोदयम् ।
निवयवारितवृत्तिरितस्तया
न विवृतो मदनो न च संवृतः ॥ ८४

१-१-८.(ग) अतिप्रकाशः प्रकटः यथा—

(2)इअरो जणो ण आणइ धण्णाण सुसंजआइ पेम्माइं ।
अमहं मणोरहा दुंखआ ण रच्छासु गिज्जंति ॥ ८५

अथ १—२. नैमित्तिकानुरागः—सोपि २४ चतुर्विंशतिधा—काल-समय-वेलो-पाधि-साधन-समावेश-देश-प्रकीर्णक-त्रैविध्यात् ।

---

(1) तव दर्शनसंजनितोऽस्या लज्जालोरनुरागः । दुर्गतमनोरथ इव हृदय एव याति परिणामम् ॥

(2) इतरोजनो न जानाति धन्यानां सज्जितानि प्रेमाणि । .......मनोरथा दुःखदा न रथ्यासु गायन्ति ॥

तेषु १–२–१. कालः—हेमन्तवसन्तवर्षादिः । तन्निमित्तः—

१-२-१.(क) हैमन्तिकः, १-२-१.(ख) वासन्तिकः, १-२-१.(ग) वार्षिकः.

१–२–२. समयः—प्रवासारंभ, प्रत्यागम, प्रथमसङ्गमादिः । तन्निमित्तः—

१-२-२.(क) प्रावासिकः, १-२-२.(ख) प्रात्यागमिकः, १-२-२.(ग) प्राथमसाङ्गिकः.

१–२–३. वेला—प्रदोषः, निशीथः, प्रभातम्, इति । तन्निमित्तः—

१-२-३.(क) प्रादोषिकः, १-२-३.(ख) नैशीथः, १-२-३.(ग) प्राभातिकः.

१–२–४. उपाधिः—तमः, चन्द्रोदयः, ज्योत्स्ना, इति । * (तन्निमित्तः—

१-२-४.(क) तामसः, १-२-४.(ख) चान्द्रोदयः, १-२-४.(ग) ज्यौत्स्नः.)

१–२–५. साधनम्—स्नानम्, विलेपनम्, माल्यम्, इति । तन्निमित्तः—

१-२-५.(क) स्नानीयः, १-२-५.(ख) विलेपनीयः, १-२-५.(ग) माल्यीयः इति.

१–२–६. सक्तिस्समावेशः—उपसरः, प्रासादः, मदः, इति । तन्निमित्तः—

१-२-६.(क) औपसरः, १-२-६.(ख) प्रासादिकः, १-२-६.(ग) मदजः इति.

१–२–७. देशः—विविक्तः, गहनः, सेव्यः, इति । तन्निमित्तः—

१-२-७.(क) विविक्तनिमित्तः, १-२-७.(ख) गहनानिमित्तः, १-२-७.(ग) सेव्यनिमित्तः इति.

१–२–८. गीतम्, उत्सवः, चूतादयः इति प्रकीर्णकानि । तन्निमित्तः—

१-२-८.(क)× गीतनिमित्तः, १-२-८.(ख) औत्सवः, १-२-८.(ग)× चूतादिनिमित्तः इति.

१–२–१.(क) हैमन्तिको यथा—

(1)कस्स ण सद्धा गरुअत्तणंमि पइणा पसज्जमाणस्स ।
जइ माणभञ्जणीओ ण हौंति हेमंतराईओ ॥ ८६

---

* अत्र कुण्डलान्तर्गतं विवरणवाक्यं गलितं । उत्तरत्र उदाहरणस्थलात्तु रोधेन योजितान्यक्षराणि ॥

× अत्र (क) प्रभेदनाम्नि "निवसन" इति, (ग) प्रभेदनाम्नि "क्षणप्रभवः" इति मातृकायां दृश्यते उदाहरणनिरूपणानुसारेण उद्देशवाक्ये निवेशितानि नामाक्षराणि ।

(1) कस्य न श्रद्धा गुरुत्वे पत्या प्रसाद्यमानस्य । यदि मानभञ्जिन्यो न भवन्ति हेमन्तरात्रयः ।

१-२-१.(ख) वासन्तिको यथा—

(1)दीसइ ण चूअमुउळं अत्ता ण अ वाइ मलअगंधवहो ।
एअं वसंतमासं साहइ उक्कंठओ च्चेअ ॥ ८७

१-२-१.(ग) वार्षिको यथा—

(2)जं मुच्छिआए ण सुओ कळंबगंधेण तग्गुणे पडिओ ।
इहरा गज्जिअसद्दो जीएण विणा ण बोळंतो ॥ ८८

१-२-२.(क) प्रावासिको यथा—

(3)कळ्ळं किर खरहिअओ पवसिहिइ पिओत्ति सुव्वइ जणम्मि ।
तह वड्ढ भअवइ णिसे जह से कळ्ळं चिअ ण होइ ॥ ८९

१-२-२.(ख) प्रात्यागमिको यथा—

(4)सहसा मा सहिप्पइ पिआगमो तीए विरहकिसिआए ।
अच्चंतपहरिसीए वीजामआसामअच्चेअ ॥ ९०

१-२-२.(ग) प्राथमसङ्गमिको यथा—

(5)थरहरइ ऊरुजुअळं झिज्जइ वअणं ससज्झसं हिअअं ।
बाळाए पडमसुरए किं किं ण कुणंति अंगाइं ॥ ९१

१-२-३.(क) प्रादोषिको यथा—

(6)पत्तपओसो पडिवण्णमंड(णो)ळो घडिअदूइसंचारो ।
धोवावसेस घोळिरमणोरहो होइ जुअइजणो ॥ ९२

---

(1) दृश्यते न चूतमुकुलं श्वश्रु न च वाति मलयगन्धवहः । प्राप्तं वसन्तमासं कथयत्युत्कण्ठितमेव ॥

(2) यन्मूर्च्छितया न श्रुतः कदंबगन्धेन तद्गुणे पतितः । इतरथा गर्जितशब्दो जीवेन विना नापक्रा
[(माति) न्तः ॥

(3) कल्यं किल खरहृदयः प्रवत्स्यति प्रिय इति श्रूयते जने । तथा वर्धस्व भगवति निशे यथा तस्य
[कल्यमेव न भवति ॥

(4) सहसा मा स......प्रियागमस्तस्या विरहकृशायाः । अत्यन्तप्रहर्षाया...................... ॥

(5) थरथरायते ऊरुयुगलं......वचनं ससाध्वसं हृदयं । बालायाः प्रथमसुरते किं किं न कुर्वन्त्यङ्गानि ॥

(6) प्राप्तप्रदोषः प्रतिपन्नमण्डनो घटितदूतीसञ्चारः । ......वशेषघूर्णन्मनोरथो भवति युवतिजनः ॥

१–२–३.(ख) नैशीथो यथा—

क्व प्रस्थितासि करभोरु घने निशीथे
　प्राणेश्वरो वसति यत्र मनःप्रियो मे ।
एकाकिनी वद कथं न बिभेषि बाले
　नन्वस्ति पुंखितशरो मदनस्सहायः ॥　९३

१–२–३.(ग) प्राभातिको यथा—

(1)पिअळंभेण पओसो जाआ दिण्णप्फळा रइसुहेण णिसा ।
आणिअविरहुक्कंठो गळइ अ णिव्विण्णवम्महो पच्चूसो ॥　९४

१–२–४.(क) तामसो यथा—

(2)चोरिअरअसद्धाळुइ मा पुत्ति ब्भमसु अन्धआरम्मि ।
अहिअअरं ळक्खिज्जसि तमहरिए दीवअसिहेव्व ॥　९५

१–२–४.(ख) चान्द्रो (दयो) यथा —

(3)चंदुज्जोएण मओ मएण चन्दाअवो णु वड्ढिअपसरो ।
दोहि वि तेहि णु मअणो मअणेण णु दोवि ते णिआ अइभूमिं ॥

१–२–४.(ग) ज्यौत्स्नो यथा—

(4)अणुणअसुहं ण पत्तं पिआहि दइएसु खिज्जइव्वि ण चळअं ।
ओसारिअंमि पडमं दूईए वदोसिआए ....गहणे ॥　९७

---

(1) प्रियलंभेन प्रदोषो जातो दत्तफलो रतिसुखेन निशा । आनीतविरहोत्कण्ठो गलत्यनिर्विण्णमन्मथः [प्रत्यूषः ॥

(2) चौर्यरतश्रद्धाशीले मा पुत्रि भ्रमान्धकारे । अधिकतरं लक्षिष्यसे तमोभृते दीपशिखेव ।

(3) चन्द्रोद्योतेन मदो मदेन चन्द्रातपो नु वर्धितप्रसरः । द्वाभ्यामपि ताभ्यां नु मदनो मदनेन नु द्वावपि तौ नीतावतिभूमिं ॥

(4) अनुनयसुखं न प्राप्तं प्रियाभिर्दयितेषु ............... । अपसारिते प्रथमं दूत्या ............... ॥

१–२–५.(क) स्नानीयो यथा—

[1]अवरण्हाअअजामाउअस्स विउणेहु मोहणुक्कंठं ।
वहुआए घरपरोहरमज्जण मुहळो वळअसद्दो ॥ ९८

१–२–५.(ख) विलेपनीयो यथा—

[2]बोहे (अइ) पासुत्तं मअणं मिहुणाण परिअणकरेहिं ।
भज्जंतसुसिणघोळिरबाहुळआवळअणिग्घोसो ॥ ९९

१–२–५.(ग) माल्यीयो यथा—

[3]कारणगहिअं पि इमा माणं मोएइ माणिणिअणस्स ।
सहआरमंजरी पिअसहिव्व कण्णे समुल्ळीणा ॥ १००

१–२–६.(क) औपसरो यथा—

[4]पिअळंबजसाहुळिपाण्डराए जहणभरमंदगमणाए ।
अहिधाविऊण चिप्फप्पुप्फफळआए धण्णोसि ॥ १०१

१–२–६.(ख) प्रासादिको यथा—

[5]णिम्मरिअसंधिअं मा तावअ दूरपडिबद्धवंमहपसरा ।
गरुअं सुरउच्छाहं दाऊण सहिव्व जामिणी तिए गआ ॥ १०२

१–२–६.(ग) मदजो यथा—

[6]ओळोइअंमि तुळि....पिआहि गाहिअंमि संभमेण वळइअं ।
पडिच्चक्खिअं पि अ कअं चपए संधिअसरं अणंगेण धणुं ॥ १०३

---

(1) अपराह्णागतजामातुः द्विगुणयति मोहनोत्कण्ठां । वध्वागृहपश्चाद्भागमज्जनमुखरो वलयशब्दः ॥

(2) बोधयति (तीव) प्रसुप्तं मदनं मिथुनानां परिजनकरैः । भज्यमान........घूर्णद्बाहुलतावलयनिर्घोषः ॥

(3) कारणगृहीतमप्येषा मानं मोचयति मानिनीजनस्य । सहकारमञ्जरी प्रियसखीव कर्णं समाश्रिता ॥

(4) प्रिय...........पाण्डरया जघनभरमन्दगमनया । अभिधाव्य........पुष्पफलकया धन्योसि ॥

(5) निर्म........मा तावच्च दूरप्रतिबद्धमन्मथप्रसरा । गुरुकं सुरतोत्साहं दत्वा सखीव यामिनी तस्या गता ॥

(6) अवलोकिते...........गृहीतें संभ्रमेण वलयितं । प्रत्याख्यातमपि च कृतं....संहितशरं अनङ्गेन धनुः ॥

१–२–७.(क) (विविक्तो यथा—)

निर्यता परिजनेन बोधितःपूर्यमाणरुचिरुल्लसद्दशः ।
द्वारसंवलनमांसलोऽधिकं दीपकश्च मदनश्च दृश्यते ॥ १०४

१–२–७.(ख) गहननिमित्तो यथा—

[1]झिज्जं तिझं तेहिं पळ्ळविआ होंति पळ्ळवंतेहिं ।
गामासण्णपळासेहिं पंसुळीहिअअसब्भावा ॥ १०५

१–२–७.(ग) सेव्यनिमित्तो यथा—

[2]पुळ्ळंतनिरंतरतरुणवंजुळावणसिणद्धकूळाए ।
गोळाणईअ डवसिरिस इत्ति मा पुत्ति पत्तिअ सु ॥ १०६

१–२–८.(क) गीतानिमित्तो यथा—

[3]केणा चि अज्ज गोसे कप्पिवणे वळ्ळहं म्हरंतेण ।
अंहमअणसराहअहिअअवणप्फोडणं गीअं ॥ १०७

१–२–८.(ख) उत्सवनिमित्तो यथा—

[4]साहीणे पि पिअअमे पत्ते वि च्छणे ण मंडिओ अप्पा ।
दुग्गअपउत्तपइअं सअंधिअं संठवंतीए ॥ १०८

१–२–८.(ग) चूतादिनिमित्तो यथा—

किं द्वारि दैवहतिके सहकारकेण
संवर्धितेन विषपादप एष पापः ।
अस्मिन्मनागपि विकासविकारभाजि
भीमा भवन्ति मदनज्वरसन्निपाताः ॥ १०९

---

(1) .......तैः पल्लविता भवन्ति पल्लवद्भिः । ग्रामासन्नपलाशैः पांसुलाहृदयसद्भावाः ।

(2) पुल्लनिरन्तरतरुणवंजुलवनस्निग्धकूलायाः । गोदानद्या ........मा पुत्रि.............. ॥

(3) केनापि अद्य प्रभाते ....वने वल्लभां स्मरता । ...मदनशराहतहृदयव्रणस्फोटनं गीतम् ॥

(4) स्वाधीनेऽपि प्रियतमे प्राप्तेऽपि क्षणे न मण्डित आत्मा । दुर्गतप्रोषितपतिकां सगन्धिकां संस्थापयन्त्या ॥

१—३. सामान्यानुरागोपि २४ चतुर्विंशतिप्रकारः—

१. द्रव्यगोचरः
२. गुणगोचरः
३. कर्मगोचरः
४. संक्षिप्तः
५. विक्षिप्तः
६. समस्तः
७. व्यस्तः
८. शुद्धः
९. सङ्कीर्णः
१०. साधर्म्यकृतः
११. वैधर्म्यकृतः
१२. महाविषयः
१३. अल्पविषयः
१४. देशहेतुः
१५. कालहेतुः
१६. धर्मविषयः
१७. समयजन्मा
१८. *........
१९. सम्बन्धजन्मा
२०. प्राकृतः
२१. वैकृतः
२२. वयःकृतः
२३. वैदग्ध्यकृतः
२४. सौभाग्यकृतः

इति.

तत्र १—३—१. द्रव्यगोचरो यथा—

(1)करिकलभकुंभसण्णिहथणभरभज्जंततणुअमज्झाओ ।
संसारंमि असारे सारं सारङ्गणअणाओ ॥ ११०

१—३—२. गुणगोचरो यथा—

(2)तावमवणेइ ण तहा चंदणपंको वि कामिमिहुणस्स ।
जह दूसहे वि गिम्हे अण्णोण्णालिंगणसुहेल्ळी ॥ १११

१—३—३. कर्मगोचरो यथा—

(3 ण वि तह छेअरआइँ वि हरंति पुणरुत्तराअरसिआइं ।
जह जत्थ व तत्थ व जह व तह व सब्भावरमिआइं ॥ ११२

---

* अत्र प्रभेदानां उद्देशानुरोधेन नामविन्यासपरिपाट्यां १८ अष्टादशस्य नाम्नः त्रुटिचिह्नं दृश्यते. उदाहरणानुक्रमेतु सप्तदशस्य नाम्नः त्रुटिः गोचरीभवति । यथा—उद्देशानुक्रमे १६ धर्मविषयः, १७ समय जन्मा, १८...........इति. उदाहरणधोरण्यां तु १६ र्मविषयः १७ ........... १८ समयजन्मा १९ संबन्धजन्मा इति.

(1) करिकलभकुंभसन्निभस्तनभरभज्यमानतनुमध्याः । संसारे असारे सारं सारंगनयनाः ॥

(2) तापमपनयति न तथा चन्दनपङ्को ऽपि कामिमिथुनस्य । यथा दुस्सह ऽपि ग्रीष्मे अन्योन्यालिङ्गन-[सुखकेलिः ॥

(3) नापि तथा च्छेकरतान्यपि हरन्ति पुनरुक्तरागरसितानि । यथा यत्र वा तत्र वा यथा वा तथा वा [सद्भावरमितानि ॥

१-३-४. संक्षिप्तो यथा—

(1)जं तं रूवं णं तं पअं पिअं जं पि तं पि णेवच्छं ।
तरुणीअणसंबंधं अण्णं विअ किं पि तं होइ ॥ ११३

१-३-५. विक्षिप्तो यथा—

(2)*हसिआइ समाळसकोमळाइ वीसंभकोमळं भणिअं ।
सब्भावकोमळं पुळइअं अ णमिमो सुमहिळाणं ॥ ११४

१-३-६. समस्तो यथा—

(3)आअंबलोअणाणं ओळ्ळंसुअपाउदोरुजहणाणं ।
अवरण्हमज्जरीणं कए ण कामो वहइ चावं ॥ ११५

१-३-७. व्यस्तो यथा—

(4 ळीळावेळक्खविळासमसिणबंधुरमुहारविंदाइं ।
रअओच्छिअंमि..विळासिणीण सो(हग्गहसि) आइं ॥ ११६

१-३-८. शुद्धो यथा—

(5)ताव गुणिउं उ मरिउं उ बहुहि जम्मेहिं जीवेइं ।
जाव जणेण सिक्खिअं पिअविओए वि सं....पणो ॥ ११७

१-३-९. (संकीर्णो यथा —)

(6)किअरहसद्धो वोसरिअणिब्भुपण्णिअंतीण.... ।
कोऊहळंमि कुळवाळिआण इहइच्चिअ विसेसं ॥ ११८

---

(1) यत्तत् रुपं ननु तत् पदं प्रियं यदपि तदपि नेपथ्यं । तरुणीजनसंबन्धं अन्यदिव किमपि तद्भवति ॥
(2) हसितानि श्रमालसकोमलानि विस्रंभकोमलं भणितम् । सद्भावकोमलं पुलकितं च नमामस्सुमहिलानां ॥
(3) आताम्रलोचनानां आर्द्रांशुकप्रावृतोरुजघनानां । अपराह्णमज्जनशीलानां कृते न कामो वहति चापं ॥
(4) लीलावैलक्ष्यविलासमसृणबन्धुरमुखारविन्दानि । रतकेशविस्रंसने विलासिनीनां सौभाग्यहसितानि ॥
(5) तावद्गुणयितुं च मर्तुं च बहुभिर्जन्मभिर्जीवैः । यावज्जनेन शिक्षितं प्रियवियोगेपि............... ॥
(6) कृतरहश्श्रद्धः अपसृत...............न्तानां । कौतूहले कुलपालिकानां.........इष्टविशेषम् ॥
* 'अंगाइ' इति क्वचित् पाठः.

१–३–१०. साधर्म्यकृतो यथा—

[1]परिमळिअसुन्दराइं दूरपहूपंतकोउहल्ळा (ण)।
....कळअपरमिअव्वाइ होंति मुद्धाण सुरआणं ॥ ११९

१–३–११. वैधर्म्यकृतो यथा—

[2]पोढमहिळाण जं सुट्ठु सिक्खिअं तं रए सुहावेइ।
जं जं असिक्खिअं णववहूण तं तं रइं देइ ॥ १२०

१–३–१२. महाविषयो यथा—

[3]कुविआओ पसण्णाओ ओरुण्णमुहीओ विहसमाणीओ।
जह गहिआ तह हिअअं हरंति उच्छण्णमहिळाओ ॥ १२१

१–३–१३. अल्पविषयो यथा—

[4]गामतरुणीओ हिअअं हरंति *छेआणँ थणहरिळ्ळीओ।
मअणे कुसुंभरंजिअकंचुइआभरणमेत्ताओ ॥ १२२

१–३–१४. देशहेतुर्यथा—

[5]णिद्दाविराममोणव्वळिउंमुहबाहुकंठणविराए।
तिवळिविहाए मुरळीणविमिओ को ण पुळएइ ॥ १२३

१–३–१५. कालहेतुर्यथा—

[6]दिण्णतणुअंजणाइं जुअइजणस्स (द ई?)तंबोट्ठाइं।
आसण्णरइसुहाइं अहिवासज्जंति वम्महेण मुहाइं ॥ १२४

---

(1) परिमलितसुन्दराणि दूर.........कौतूहलानां।.........रमितव्यानि भवन्ति मुग्धानां सुरतानाम् ॥

(2) प्रौढमहिलानां यत् सुष्ठु शिक्षितं तद्रते सुखयति। यद्यदशिक्षितं नववधूनां तत्तद्रतिं ददाति ॥

(3) कुपिताः प्रसन्नाः अवरुदितमुख्यो विहसमानाः। यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः ॥

(4) ग्रामतरुण्यो हृदयं हरन्ति च्छेकानां स्तनभारवत्यः। मदने कुसुंभरागार्द्रकञ्चुकाभरणमात्राः ॥

* वेडाळ. इति मातृकायाम्.

(5) निद्राविराम...वलितोन्मुखबाहुकण्ठ.........। त्रिवली...... ....... ......को न पुलकयति ॥

दत्ततन्वञ्जनानि युवतिजनस्य ......ताम्रोष्ठानि। आसन्नरतिसुखानि अधिवास्यन्ते मन्मथेन मुखानि ॥

१–३–१६. धर्मविषयो यथा—

(1)सामण्णसुंदरीणं विब्भममावहइ अविणओच्चेअ।
धूमो च्चिअ पज्जळिआणं महुरो (मओ) होइ सुरहिदारूणं ॥ १२५

१–३–१७. *......... यथा—

(2)मोहेइ वीअंभणणामिअपट्ठिचळवेणि............ ।
आरोहिअपंमगडणुळअंवहणकण्णधवळच्छी ॥ १२६

१–३–१८. समयजन्मा यथा—

(3)दरवेविरोरुजुअळासु मुउलिअच्छीसु ळुळिअचिउरासु।
पुरिसाइरीसु कामो पिआसु सज्जाउहो वसइ ॥ १२७

१–३–१९. संबन्धजन्मा यथा—

(4)तह उज्जुअं विरसिअं चडुपरिहीणं विदिण्णसब्भावं।
वीसंभे वि........घरिणीरअं ण संतरइ ॥ १२८

१–३–२०. प्राकृतो यथा—

(5)हसिएहि उवाळंभा अच्चुअआरेहि रोसिअव्वाइ।
अस्सूहि मंडणाइं एसो माणो सुमहिळाणं ॥ १२९

१–३–२१. वैकृतो यथा—

(6)मसिणवसणाण कअवेणिआण आपंडुगंडवासाणं।
पुप्फवइआण कामो अंगे सु कआउहो वसइ ॥ १३०

---

(1) सामान्यसुन्दरीणां विभ्रममावहत्यविनय एव। धूम एव प्रज्वलितानां मधुरो भवति सुरभिदारूणाम् ॥

* अत्र प्रतिपाद्यभेदस्य नाम लुटितम्.

(2) मोहयति प्रलंभननमित........वेणी...... । आरूढपक्ष्म.................कृष्णधवलाक्षी ॥

(3) इषद्वेपनशीलोरुयुगलासु मुकुलिताक्षीषु लुलितचिकुरासु। पुरुषायितशीलासु कामः प्रियासु सज्जायुधो [वसति ॥

(4) तथा ऋजुकं विरासितं चाटुपरिहीणं वितीर्णसद्भावं। विस्रंभेपि...........गृहिणीरतं न सं ..... ॥

(5) हसितैरुपालंभा अत्युपचारै रोषितव्यानि। अश्रुभिर्मण्डनानि एषमानस्सुमहिलानाम् ॥

(6) मलिनवसनानां कृतवेणिकानामापाण्डुगण्डपार्श्वानां। पुष्पवतीनां कामः अङ्गेषु कृतायुधो वसति ॥

१–३–२२. वयःकृतो यथा—

(1)जह जह वि कामिणीणं सुदोविहळआअवाणसिरि.... ।
अहिदे अव्वमंडळ तह वि हु तरुंणअंताओ.... ॥ १३१

१–३–२३. वैदग्ध्यकृतो यथा—

(2)सब्भावगब्भिणं पाअडंति तह किं पि वम्महरहस्सं ।
महिळाओ जह ण विरमंति पत्तसोक्खाइ वि रआइ ॥ १३२

१–३–२४. *सौभाग्यकृतो यथा—

(3)णन्दन्तु सुरअसरभसतण्हावहराइ सअळलोअस्स ।
बहुमग्गविणिम्मविआइ वेसाविअआण हिअआइं ॥ १३३

१—४. विशेषानुरागोऽपि २४ चतुर्विंशतिप्रकारः—

| | | | |
|---|---|---|---|
| १. जातिकृतः | ७. प्रतीयमानः | १३. स्वप्रकाशः | १९. नैसर्गिकः |
| २. क्रियाकृतः | ८. अभिधीयमानः | १४. अन्याभिभावी | २०. सांसर्गिकः |
| ३. गुणकृतः | ९. बाह्यः | १५. उल्लेखवान् | २१. स्वसंमतः |
| ४. द्रव्यकृतः | १०. आभ्यन्तरः | १६. अनुल्लेखवान् | २२. स्तोकसंमतः |
| ५. साधारणः | ११. सदृशः | १७. अतिरिक्तः | २३. बहुसंमतः |
| ६. असाधारणः | १२. असदृशः | १८. अनतिरिक्तः | २४. सर्वसंमतः |

इति.

१–४–१. तत्र जातिकृतो यथा—

मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ १३४

---

(1) अविशदेयं गाथा.

(2) सद्भावगर्भितं प्रकटयंति तथा किमपि मन्मथरहस्यं । महिलाः यथा न विरमन्ति प्राप्तसौख्यान्यपि रतानि ॥

* अत्र सौभाग्यकृत इत्यस्य स्थाने "प्रसिद्धिकृतः" इत्यक्षराणि दृश्यन्ते प्रतिज्ञापरिपाटीमनुरुध्य "सौभाग्यकृतः" इत्येव न्यवेशि. प्रत्युत इदमभ्युल्लिखितुं सांप्रतं यथा १—३—१८ त्रुटितस्य "प्रसिद्धिकृतः" इति नाम स्यादिति.

(3) नन्दन्तु सुरतसरभसतृष्णापहराणि सकललोकस्य । बहुकैतवमार्गविनिर्मितानिवेश........हृदयानि ॥

१–४–२. क्रियाकृतो यथा—

(1)तह वलिअं णअणजुअं गहवइधूआए रंगमज्झंमि ।
जह ते वि णडा णडपेच्छआ वि मुहपेच्छआ जाआ ॥ १३५

१–४–३. गुणकृतो यथा—

(2)जाणइ जाणावेउं अणुणअविद्दविअमाणपरिसेसं ।
पइरिक्कंमि वि विणआवलब्बणं सच्चिअ कुणंती ॥ १३६

१–४–४. द्रव्यकृतो यथा—

(3)छणपिट्ठधूसरत्थणि महुमअतंबच्छि कुवळआहरणे ।
कण्णकअचूअमंजरि तरुणि तुए मंडिओ गामो ॥ १३७

१–४–५. साधारणो यथा—

(4)णच्चिहिइ णडो पेच्छिहिइ जणवओ होइ ओअ नुतुसिहिइ ? ।
जइ रंगविउढणअरी गहवइधूआ ण पच्छिहिइ ॥ १३८

१–४–६. असाधारणो यथा—

(5)खणमेत्तं वि ण विट्टइ अ(बु)नुदिहअं दिउणगरुअसंतावा ।
पच्छण्णपावसंकव्व सामळी मज्झ हिअआओ ॥ १३९

१–४–७. प्रतीयमानः यथा—

(6)जाइ वअणाइ अह्मे वि जप्पिमो जाइ जप्पइ जणो वि ।
ताइ च्चिअ तेण पअप्पिआइ हिअअं सुहावेंति ॥ १४०

---

(1) तथा वलितं नयनयुगं गृहपतिस्नुषाया रङ्गमध्ये । यथा तेऽपि नटाः नटप्रेक्षका अपि मुखप्रेक्षका जाताः॥

(2) जानाति ज्ञापयितुमनुनयविद्रावितमानपरिशेषं । विजनेऽपि विनयावलंबनं सैव कुर्वती ॥

(3) क्षणपिष्टधूसरस्तनि मधुमदताम्राक्षि कुवलयाभरणे । कर्णकृतचूतमञ्जरि तरुणि त्वया मण्डितो ग्रामः ॥

(4) नर्तयति नटः दर्शयति जनवचः भवति........ । यदि रंगविघटनकरी गृहपतिस्नुषा न प्रेक्षते ॥

(5) क्षणमात्रमपि न... अनुदिवसं द्विगुण गुरुसंतापा । प्रच्छन्नपापशङ्केव श्यामला मम हृदयात् ॥

(6) यानि वचनानि वयमपि जल्पामो यानि जल्पति जनोपि । तान्येव तेन प्रजल्पितानि हृदयं सुखयन्ति॥

१–४–८. अभिधीयमानो यथा—

[1]अण्णाण वि अह्नि मुहे पम्हळधवळाइ दीहकसणाइ ।
णअणाइँ सुंदरीणं तह उण दठ्ठुं, ण आणंति ॥ १४१

१–४–९. बाह्यो यथा—

[2]दरसुन्दरमहुरुल्ळाविरीए ह्ळळंतथोरघणिआए ।
सोत्थआए सुआए कओ तित्थावस.... जणो सव्वो ॥ १४२

१–४–१०. आभ्यन्तरो यथा—

[3]अइ उज्जुए ण लज्जसि पुच्छन्ती मह पिअस्स परिआइं ।
सव्वंगसुरभिणो मरुअअस्स किं कुसुमरिद्धीए ॥ १४३

१–४–११. सदृशो यथा—

[4]रेहुग्गुडिअडविअंभणसाळसभुजजुअळवळअमंडळिअं ।
बाळाए वअणकमळं कपुपरिवेसो मिअंकोव्व ? ॥ १४४

१–४–१२. असदृशो यथा—

[5]एद्दह मेत्तंमि जए सुंदरमहिळासहस्समज्झम्मि ।
अणुहरइ णवर तिस्सा वामद्धं दाहिणद्धस्स ॥ १४५

१–४–१३. स्वप्रकाशो यथा—

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुरास्सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकस्स एव महोत्सवः ॥ १४६

---

(1) अन्यासामपि स्तः मुखे पक्ष्मलधवले दीर्घकृष्णे । नयने सुन्दरीणां तथा पुनर्द्रष्टुं न जानन्ति ॥

(2) अविशदा इयं गाथा.

(3) अइ ऋजुके न लज्जसे पृच्छन्ती मम प्रियस्य ....रितानि । सर्वाङ्गसुरभेर्मरुवकस्य किं कुसुमर्द्धिभिः ॥

(4) ...........विजृंभणसालसभुजयुगलवलयमण्डलितं । बालाया वदनकमलं....परिवेषो मृगाङ्क इव ॥

(5) एतावन्मात्रे जगति सुन्दरमहिलासहस्रमध्ये । अनुहरति केवलं तस्या वामार्धं दक्षिणार्धस्य ॥

१–४–१४. अन्याभिभावी यथा—

[1]काण अ रुणा जुअरी को उ जुआ धरहरेण णाळिद्दो ।
आबद्धमंडळच्छिअ गहवइधूआधअप्पंके ? ॥ १४७

१–४–१५. उल्लेखवान्यथा—

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥ १४८

१–४–१६. अनुल्लेखो यथा—

[2]चंदसरिसं मुहं से सरिसो अमअस्स मुहरसो तिस्सा ।
सकअग्गहरहसुज्जळचुंबणअं कस्स सरिसं से ॥ १४९

१–४–१७. अतिरिक्तो यथा—

[3]अण्णं लडळहत्तणअं अण्णं च्चिअ अब्भवट्ठणच्छाआ ।
सामा सामण्णपआवइस्स रेह च्चिअ ण होइ ॥ १५०

१–४–१८. अनतिरिक्तो यथा—

[4]पळ्ळविअं पिव करपळ्ळवेहिँ पप्फुळ्ळिअं व णअणेहिँ ।
फळिअं विअ पीणपओहरेहिँ अज्जाए ळाअण्णं ॥ १५१

१–४–१९. नैसर्गिको यथा—

[5]अणवट्ठिएण विसमेण हारिणा दुण्णिवारपसरेण ।
णवजोव्वणेण अज्जा णइ व्व पूरेण मच्छळिआ ॥ १५२

---

(1) अविशदा इयं गाथा.

(2) चन्द्रसदृशं मुखं तस्यास्सदृशोऽमृतस्य मुखरसस्तस्याः । सकचग्रहरभसोज्वलचुंबनं कस्य सदृशं तस्याः ॥

(3) अन्यल्लडहत्वं अन्यदेव ........वर्तनच्छाया । श्यामा सामान्यप्रजापतेः रेखैव न भवति ॥

(4) पल्लवितमिव करपल्लवाभ्यां प्रफुल्लितमिव नयनाभ्यां । फलितमिव पीनपयोधराभ्यां तरुण्या लावण्यम् ॥

(5) अनवास्थितेन विषमेण हारिणा दुर्निवारप्रसरेण । नवयौवनेन आर्या नदीव पूरेण....... ॥

१–४–२०. *

१–४–२१. स्वसम्मतो यथा—

(1)अक्खडइ पिआ हिअए अण्णं महिळाअणं णिअंतस्स ।
दिट्ठे सरिसेव्व गुणेऽसरिसव्वगुणे अईसंते ॥ १५३

१–४–२२. स्तोकसंमतो यथा—

(2)पीळेइ वळंतुंनुंहघोरघणअइसंणमिअतणुमज्झा ।
वसथं होज्जइ धूआ हिअएहि समं जुआणाणं ॥ १५४

१–४–२३. बहुसंमतो यथा—

(3)बाउळ्ळविअळिएणं गामिणिधूआए उत्तरिज्जेण ।
थणदंसणरहसत्ताण णंचळेच्चो गओ गामो ॥ १५५

१–४–२४. सर्वसम्मतो यथा—

(4)जस्स जहिं च्चिअ पडमं तिस्सा अंगंमि णिवडिआ दिट्ठी ।
तस्स तहिं चेअ ठिआ सव्वंगं तेण वि ण दिट्ठा ॥ १५६

१—[illegible]. अथ प्रकाशानुरागः सोऽपि २[illegible] चतुर्विंशतिप्रकारः—

| | | |
|---|---|---|
| १. स्वकीयाविषयः | ९. स्ताधीनभर्तृकाविषयः | १७. ज्येष्ठाविषयः |
| २. स्ययंवराविषयः | १०. प्रोषितपातिकाविषयः | १८. कनिष्ठाविषयः |
| ३. कन्याविषयः | ११. विरहोत्कण्ठिताविषयः | १९. सुभगाविषयः |
| ४. पुनर्भूविषयः | १२. कलहान्तरिताविषयः | २०. शुद्धान्तचारिणीप्रचारः |
| ५. वेश्याविषयः | १३. खण्डिताविषयः | २१. धर्मानुबन्धः |
| ६. सामान्योढाविषयः | १४. वासकसज्जाविषयः | २२. अर्थानुबन्धः |
| ७. नवोढाविषयः | १५. एकचारिणीविषयः | २३. कामानुबन्धः |
| ८. प्रौढाविषयः | १६. सपत्नीविषयः | २४. निरनुबन्धः |

इति.

* अत्र ४—२० सांसर्गिकाख्यभेदस्य उदाहरणं गलितम्.

(1) आस्खलति प्रिया हृदये अन्यं महिलाजनं....... । दृष्टे सदृशे गुणेऽसदृशे गुण अदृश्यमाने ॥

(2) पीड........ स्थूलस्तनातिसन्नमिततनुमध्या । ....भविष्यति स्नुषा हृदयैस्समं यूनाम् ॥

(3) बाष्पार्द्रविगलितेन ग्रामिणीस्नुषाया उत्तरीयेण । स्तनदर्शन रभस...............गतो ग्रामः ॥

(4) यस्य येनैव प्रथमं तस्या अङ्गे निपतिता दृष्टिः । तस्य तैनैव स्थिता सर्वाङ्गं तेनापि न दृष्टा ॥

तत्र १-५-१. स्वकीयाविषयो यथा—

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ १५७

१-५-२. स्वयंवराविषयो यथा—

ततः सुनन्दावचनावसाने
लज्जां तनूकृत्य नरेन्द्रपुत्री ।
दृष्ट्या प्रसादामलया कुमारं
प्रत्यग्रहीत्संवरणस्रजेव ॥ १५८

१-५-३. कन्याविषयो यथा—

कन्यारत्नमयोनिजन्म भवतामास्ते वयं चार्थिनो
रत्नं यत्कचिदस्ति तत्परिणमत्यस्मासु शक्रादपि ।
कन्यायाश्च वरार्थतैव हि मता तस्याः प्रदानादहं
बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठाश्च सम्बन्धिनः ॥ १५९

१-५-४. पुनर्भूविषयो यथा—

के वैकटनितम्बेन गिरां गुम्फेन रञ्जिताः ।
निन्दन्ति निजकान्तानां न मौग्ध्यमधुरं वचः ॥ १६०

१-५-५. वेश्याविषयो यथा—

(1) सामण्णसुंदरीणं विब्भममावहइ अविणओ चेअ ।
धूमो चिअ पज्जलिआणं महुरो होइ सुरभिदारूणं ॥ १६१

1. सामान्यसुन्दरीणां विभ्रममावहति अविनय एव। धूम एव प्रज्वलितानां मधुरो भवति सुरभिदारूणां ॥

१-५-६. सामान्योढाविषयो यथा—

(1) दिअरो परिणिहिइ पुडंप....आ सुणिमं दुडुंकिआ जाया ।
सेसिअघरवावारा ओरुण्णमुही परिब्भमइ ॥ १६२

१-५-७. नवोढाविषयो यथा—

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिंगिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढा वधूः ॥ १६३

१-५-८. प्रौढाविषयो यथा—

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरतः
ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ १६४

१-५-९. स्वाधीनभर्तृकाविषयो यथा—

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शेस्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मोहयति च ॥ १६५

१-५-१०. प्रोषितपतिकाविषयो यथा—

अंगेनांगं प्रतनु तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रवमविरतोत्कण्ठमुत्कण्ठितेन ॥

1. देवरः परिगेऽप्रति.......श्रुत्वा दुःखिता जाता । शेषितगृहव्यापारा अवरुदितमुखी परिभ्रमति ॥

उष्णोच्छवासं समधिकतरोच्छवासिना दूरवर्ती ।
संकल्पैस्ते विशति विधिना वैरिणा रुद्धमार्गः ॥ १६६

१-५-११. विरहोत्कण्ठिताविषयो यथा—

(1) अज्ज मए तेण विणा अणुहूअसुहाइ सम्भरंतीए ।
अहिणवमेहाणँ रवो णिसामिओ वज्झपडहो व्व ॥ १६७

१-५-१२. कलहान्तरिताविषयो यथा —

मया तावद्गोत्रस्खलनहतकोपान्तरितया
न रुद्धो निर्गच्छन्ननुनयविलक्षः प्रियतमः ।
अयं त्वाकूतज्ञः परिणतिपरामर्शकुशलः
सखीलोकोऽप्यासील्लिखित इव चित्रे कथमिदम् ॥ १६८

१-५-१३. खण्डिताविषयो यथा—

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्तांबूलरागोऽपरः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसः
लीलातामरसोदरे मृगदृशश्श्वासास्समाप्तिं गताः ॥ १६९

१-५-१४. वासकसज्जाविषयो यथा —

(2) एहिइ पिओत्ति णिमिसं व जग्गिअं जामिणीए पढमद्धं ।
सेसं संतावपरव्वसाए वरिसं व बोळिणं ॥ १७०

१-५-१५. एकचारिणीविषयो यथा —

आतिथिभिर्गतमेव दिवा गतैः
अपाथिकागमना च निशीथिनी ।

1. अद्य मया तेन विना अनुभूतसुखानि संस्मरन्त्या । अभिनवमेघानां रवो निशमितो वध्यपटह इव ॥
2. एष्यति प्रिय इति निमिष इव जागरितं यामिन्याःप्रथमार्धम् । शेषं सन्तापपरवशाया वर्ष इव अपक्रान्तं ॥

तदधुना प्रतिजागृहि पुत्रकान्
प्रविश वेश्म कुटुम्बिनि शेमहे॥ १७१

१ ५ १६. सपत्नीविषयो यथा—

यांयां प्रियः प्रक्षैत कातराक्षी
सासा ह्रिया नम्रमुखी बभूव ।
निश्शांकमन्याः सममाहितेर्ष्याः
तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥ १७२

१ ५ १७ ज्येष्ठाविषयो यथा—

(1) तं तिअसकुसुमदामं हरिणा णिंमहिअसुरभिगंधामोअं ।
अप्पणइअं वि दूमिअ पणइणि हिअएण रुप्पिणीए विइण्णं ॥ १७३

१ ५ १८. कनिष्ठाविषयो यथा—

(2) कुविआ अ सच्चहामा समेवि बहुईण णवरमाणक्खलणे ॥
पाअडिअहिअअसारो पेम्म संवसरिसो व अट्टइ मंतु । १७४

१ ५ १९. सुभगाविषयो यथा—

(3) उक्खिप्पइ मारुअमंडळेण गेहंगणाए वाहीए ।
सोहग्गधअवडाएव उव धणुरोरुंफरिं छोळी ॥ १७५

१ ५ २०. शुद्धान्तचारिणीप्रचारो यथा—

स्नाता तिष्ठति कुन्तलेश्वरसुता वारोंगराजस्वसुः
द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याऽद्य च ।
इत्यन्तः पुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थिता नाडिकाः ॥ १७६

1. तत् त्रिदशकुसुनदाम हरिणा निर्मथित सुराभिगन्धामोदं । ..दुःखितप्रणायिनी हृदयेन रुक्मिण्याविर्तीणं ॥
2. कुपिता च सत्यभामा समेपि वधूनां केवलमानस्खलने । प्रकटितहृदयसारः पेम...पवर्तते मन्तु ॥
3. उत्क्षिप्यते मारुतमण्डलेन गेहांगणाद्व्याध्याः सौभाग्यध्वजपटशतांकवपधनुस्त्वकपरंपरा ॥

१ ५ २१· धर्मानुबन्धो यथा—

स मानसीं मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीयाम्
आत्मानुरूपां विधिनोपयेमे ॥ १७७

१ ५ २२· अर्थानुबन्धो यथा—

यतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका समागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभादियं सर्वथा
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन्करोमि स्पृहाम् ॥

१ ५ २३· कामानुबन्धो यथा—

आमूलकण्टकितकोमलबाहुनाल-
मार्द्रांगुलीदलमनांगानिदाघतप्तम् ।
अस्याः करेण करमाकलयामि कान्त-
मारक्तपांकजमिव द्विरदः सरस्याः ॥ १७९

१ ५ २४· निरनुबन्धो यथा—

(1) णाराअणोत्ति परिणअपराहिँ सिरिवल्लहोत्ति तरुणीहिं ।
बालेहिं उण कोऊहळेण एमेअ सच्चविओ ॥ १८०

१—६· एवं प्रच्छन्नानुरागोऽपि २ चतुर्विंशतिप्रकारः—

| | | |
|---|---|---|
| १· परांगनाविषयः | ५· धीराविषयः | ९· सुलभः |
| २· स्वांगनाविषयः | ६. अधीराविषयः | १०· दुर्लभः |
| ३· स्वैरिणीविषयः | ७· विप्रलब्धाविषयः | ११· सन्निकृष्टः |
| ४· कुमारीविषयः | ८· अभिसारिकाविषयः | १२. विप्रकृष्टः |

1. नारायण इति परिणतपराभिः श्रीवल्लभ इति तरुणीभिः । बालाभिः पुनः कौतूहलेन एवमेव निश्चितः ॥

| | | |
|---|---|---|
| १३. संबद्धः | १७. भयनिमित्तः | २१. नागरः |
| १४. असंबद्धः | १८. लज्जानिमित्तः | २२. उपनागरः |
| १५. सापदेशः | १९. देशनियतः | २३. ग्राम्यः |
| १६. निरपदेशः | २०. कालनियतः | २४. प्रकीर्णः इति. |

१६१. तत्र परांगनाविषयो यथा –

(1) एमेअ अकअपुण्णा अप्पत्तमणोरहा विवज्जिस्सं ।
जणवाओ वि ण जाओ तेण समं हलिअउत्तेण ॥ १८१

१६२. स्वांगनाविषयो यथा –

(2) पणअं पडमपिआए रक्खिउकामो वि महुरमहुरेहिं ।
च्छेअपरो वि ण दिज्जइ अहिणववहुआविळासेहिं ॥ १८२

१६३. स्वैरिणीविषयो यथा –

(3) तह सा जाणइ जाआ ळोए पच्छण्णमविणअं कादुं ।
जह पडमं च्चिअ लिक्खइ मज्झे चारित्तवत्तीणं ॥ १८३

१६४. कुमारीविषयो यथा –

(4) अज्ज मए उच्छासो थअगेहे....मणोरहं भमिअं ।
गहवइउत्तकाडिळ्ळं दिट्ठं णिअरूपळावणिअं ॥ १८४

१६५. धीराविषयो यथा –

(5) पाअडिअणेहसब्भावाविब्भमं तीए जह अहं दिट्ठो ।
संवरणवावडाए अण्णो वि जणो तहच्चेअ ॥ १८५

---

1. एवमेव अकृतपुण्या अप्राप्तमनोरथा विपत्स्ये । जनवादोपि न जातस्तेन समं हालिकपुत्रेण ॥
2. प्रणय प्रथमप्रियाया रक्षितुकामोऽपि मधुरमधुरैः छेकपरो पि न......अभिनववधूविलासैः ॥
3. तथा सा जानाति जाया लोके प्रच्छन्नमविनयं कर्तुं यथा प्रथममेव लिख्यते मध्ये चारित्रवर्तीनाम् ॥
4. अद्य मया उच्छ्वासः स्वकगेहे ...मनोरथं भ्रमितम् । गृहपतिपुत्र दौवारिकं दृष्टं निजरूपलावण्यम् ॥
5. प्रकटितस्नेहसद्भावविभ्रमं तया यथाऽहं दृष्टः । संवरणव्यापृतया अन्योऽपि जनस्तथैव ॥

१-६-६. अधीराविषयो यथा—

(1) आअस्स किं णु काहं किं वोच्चं कहणु होहिमि अहं ति ।
पडमुल्लिअसाहसआरिआए हिअअं धरहरेइ ॥ १८६

१-६-७. विप्रलब्धाविषयो यथा—

(2) अह सा तहिं तहिं चिअ वाणीरवणंमि चुक्कसंकेआ ।
तुह दंसणं विमग्गइ पँहुट्ठणिआणठाणं वा १८७

१-६-८. अभिसारिकाविषयो यथा—

(3) अज्ज मए गंतव्वं घणंधआरे वि तस्स सुहअस्स ।
अज्जा णिमीलिअच्छी पअपरिपाडिं घरे कुणइ ॥ १८८

१-६.९. सुलभो यथा-

(4) संकेअऊसुअमणोगहवइधूआकडक्खसण्हइओ ।
तंत्रं गअं ण वेअइ पीडाओरंबरं दुहइ ॥ १८९

१-६-१०. दुर्लभो यथा-

(5) ए(व?)क्कंगणदुळहे माणुसम्मि दच्छइ जणो णिअंतो वि ।
पुणरुत्तदंसआ सिक्किआ हि वरहिग्गि चुडुळंहि ॥ १९०

१-६-११.सन्निकृष्टो यथा-

(6) बहळअमा हअराई अज्ज पउत्तो पई घरं सुण्णं ।
तह जग्गेसु सअंधिअ ण जहा अह्मे मुसिज्जामो ॥ १९१

---

1. आगतस्य किंनु करिष्यामि किं वक्ष्यामि कथं नु भविष्यामि अहमिति । प्रथमसमयसाहस- [कारिकाया हृदयं धरधरायते ॥

2. अथ सा तत्र तत्रैव वानीरवने विस्मृतसंकेता । तव दर्शनं विमार्गति विस्मृतनिधानस्थानमिव ॥

3. अद्य मया गन्तव्यं घनान्धकारेऽपि तस्य सुभगस्य । आर्या निमीलिताक्षी पदपरिपाटीं गृहे करोति ॥

4. संकेतोत्सुकमनोगृहपतिस्नुषाकटाक्षसंज्ञापितः ।........................................... ॥

5. अविशदा गाथा

6. बहलतमा हतरात्रिरद्य प्रोषितःपतिर्गृहं शून्यं । तथा जागृहि सगन्धिक न यथा वयं मुष्यामहे ॥

१-६-१२. विप्रकृष्टो यथा–

(1) चूडसुणओ विपण्णो अत्ता मत्ता पइ(ण)अनुराए ।
फलिअं अ मोथिअं महिसएण को तस्स साहेइ ॥ १९२

१-६-१३. सम्बद्धो यथा–

(2) रत्तिं णिद्दअरमिओ दिअरो बहुआए मळउ पोत्तीए ? ।
मा छिवसुत्ति पहाए भणिओ अंतोमुहं हसइ ॥ १९३

१-६-१४. असम्बद्धो यथा–

(3) सुप्पं दड्ढं चणआ ण हुग्गिआ पंथिओ अ वोळीणो ।
अत्ता घरंमि कुविआ भूआणं वाइओ वंसो ॥ १९४

१-६-१५. सापदेशो यथा–

(4) पइपुरओ च्चिअ णिज्जइ विंछुअदट्ठेत्ति जारवेज्जघरं
सहिआसएण करधारिअहुअळअंदोळिरी मुद्धा ॥ १९५

१-६-१६. निरपदेशो यथा–

(5) उग्गाहिएक्कहुमअं तणुहासफुरंतदसणजोण्हाळं ।
कस्स ण हरेइ हिअअं चोरिअदिट्ठं मअच्छीए ॥ १९६

१-६-१७. भयनिमित्तो यथा–

(6) पणअस्खळणासंकाळुआणँ लोआपवाअभीआणं ।
ळज्जाळुआण काळो····अगओ णिरवसेसो ॥ १९७

---

1. दुष्टशुनको विपन्नः अत्ता मत्ता प्रफेनकसुरया । कार्पासी च मोटिता महिषणकस्तस्य साधयति ॥
2. रात्रिं निर्दयरमितो देवरो वध्वा ... ........ । मा स्पृशेति प्रभाते भणितः अभिमुखं हसति ॥
3. शूर्पं दग्धं चणका न भर्जिताःपान्थश्चापक्रान्त । श्वश्रूः गृहे कुपिता भूतानां वादितो वंशः ॥
4. पतिपुर एव नीयते वृश्चिकदष्टेति जारवैद्यगृहम् । सख्याश्रयेण करधारितभुजलतांदोलनशीला मुग्धा ॥
5. उद्ग्राहितैकभु......तनुहासस्फुरद्दशनज्योत्स्नालं । कस्य न हरति हृदयं चौर्यदृष्टं मृगाक्ष्याः ॥
6. प्रणयस्खलनाशंकालूनां लोकापवादभीतानां । लज्जालूनां कालः.................... गतो निरवशेषः ॥

१–६–१८. लज्जानिमित्तो यथा—

(1)सलिलोल्लदारुआलंपअत्तोच्चिअ सिमिसिमाअमाणाइं ।
मअणाणलेण लज्जालुआण धज्जंति हिअआइं ॥ १९८

१–६–१९. कालनियतो यथा—

(2)आअरपणामिओट्ठं अघडिअणासं असंहअणिडालं ।
वण्णघिअतुप्पमुहिए तीए परिचुंबिअं म्हरिमो ॥ १९९

१–६–२०. देशानियतो यथा—

(3)जाणामि जणो णिउणो गुरुअणमज्झंमि संठिआ अ अहं ।
ता किं करेमि पिअसहि धरिआ वि वळा वळइ दिट्ठी ॥ २००

१–६–२१. नागरो यथा—

(4)किं ण भणिओ सि बाळअ गामिणिधूआए गुरुअणसमक्खं ।
अणिमिस . वक्कवळंतवअणणअणद्धदिट्ठेहिं ॥ २०१

१–६–२२. उपनागरो यथा—

(5)....गिळुक्कविआसई णिरंगिवेरंतपेसिअच्छिजुअं ।
अदिट्ठणडंडणकपेच्छिरीए दीसंत धण्णोसि ॥ २०२

१–६–२३. ग्राम्यो यथा—

(6)दट्ठुं चिरं ण लद्धो मामि पिओ दिट्ठिगोअरगओ वि ।
दंडाहअवळिअहुअंगवक्करच्छे हअग्गामे ॥ २०३

---

(1) सलिलार्द्रदारु...........सिमसिमायमाणानि । मदनानलेन लज्जालूनां दह्यन्ते हृदयानि ॥

(2) आदरप्रणामितोष्ठं अघटितनासं असंहतनिटालं । वर्णघृतलिप्तमुख्यास्तस्याः परिचुंबितं स्मरामः ॥

(3) जानामि जनो निपुणः गुरुजनमध्ये संस्थिता चाहं । तत् किं करोमि प्रियसखि धृतापि बलाद्वलते दृष्टिः ॥

(4) किं न भणितोऽसि बालक ग्रामणिस्नुषया गुरुजनसमक्षम् । अनिमिष. वक्रवलद्वदननयनार्धदृष्टैः ॥

(5) ......................प्रेषिताक्षियुगं । ..............प्रेक्षणशीलया दृश्यमानो धन्योऽसि ॥

(6) द्रष्टुं चिरं न लब्धो मामि प्रियो दृष्टिगोचरगतोऽपि । दण्डाहतवलितभुजङ्गवक्ररथ्ये हतग्रामे ॥

१–६–२४. प्रकीर्णो यथा—

[1]चुंबइ वासिण्णमुही दइअकओ(ळं)व्व पंडुरच्छाअं ।
असई णिहुवणपडपाअवस्स वाआणिअं पत्तं ॥ २०४

१—७. अथाकृत्रिमः. सोऽपि २४ चतुर्विंशतिविधः सहजयौवनजाहार्यज विस्रम्भजानां भेदोपभेदप्रभेदसम्भेदविभेदभेदात् अनन्यजानेव्या ? तत्र भेदाः सहजा ? य एव.

१–७–१. तेषु जन्मान्तरानुभवजन्मा निष्कारणमेव प्रवृत्तः प्रकर्षगामी सहजः यथा—

इयं महेन्द्रप्रभृतीनधिश्रियः
चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्
पिनाकपाणिं पतिमाप्तुमिच्छति ॥ २०५

१–७–२. स उपभेदतो द्वेधा, एकविषयोऽनेकविषयश्च, तत्रैकविषयो यथा—

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेर्यस्यासीत्सैव जाया हिरण्मयी ॥ २०६

१–७–३. अनेकविषयो यथा—

[2]असईण णमो ताणं दप्पणसरिसेसु जाण हिअएसु ।
जोच्चेअ ठाइ पुरओ सहसा सोच्चेअ संकमइ ॥ २०७

१–७–४. तारुण्योद्रेकादुपाचितेषु उपचीयमानेषु च शरीरधातुषु दर्पातिरेकाद्य उपजायते स यौवनजः यथा—

[3]तद्दिअहकआभोआ जह जह थणआ विणिंति कुमरीणं ।
तह तह लद्धावासो व्व वम्महो हिअअमाविसइ ॥ २०८

---

(1) चुंबति ... मुखी दयित (कपोलमिव) पाण्डुरच्छायं । असती निधुवनवटपादपस्य वातानीतं पत्रम् ॥
(2) असतीनां नमस्तासां दर्पणसदृशेषु यासां हृदयेषु । य एव तिष्ठति पुरः सहसा स एव सङ्क्रामति ॥
(3) ...कृताभोगा यथा यथा स्तनाः...कुमारीणां । तथा तथा लब्धावास इव मन्मथो हृदयमाविशति ॥

१–७–५. सोऽपि द्विधा शारीरो मानसश्च तत्राद्यो यथा—

[(1)]चंपहइ वीअकंठं मज्झ सुओ एक्कपहरविणिवाअं ।
तं कुळदूसणि सोह्ले धणाण तुह मज्झए पड.... ॥ २०९

१–७–६. द्वितीयो यथा—

[(2)]णअणाण इरणो मंभिहिंति उज्जुअपहं पवट्टंता ।
इअ सिक्खंतवदं साळो ळोअणं होंततरुणीओ ॥ २१०

१–७–७. चक्षुःप्रीतिमात्रे वा सति उपचारैः यः प्रकर्षमापद्यते स आहार्यः, यथा—

[(3)]घरिणीए अकअळं वंच धुअं मं? पिअअमे कुणंतंमि ।
अकअत्थाए वि जाआइ झत्ति सिढिळाइ अंगाइ ॥ २११

१–७–८. सोऽपि द्विधा स्थिरो भङ्गुरश्च. स्थिरो यथा —

[(4)]मामि हिअअं व पीअं तेण जुवाणेण मज्जमाणीए ।
ह्लाणहळिद्दाकडुअं अणुसोत्तजळं पिवंतेण ॥ २१२

१–७–९. भङ्गुरो यथा—

[(5)]ळज्जा छत्ता सीळं च खंडिअं अजसघोसणा दिण्णा ।
जस्स कए णं पिअसहि सो च्चेअ जणो जणो जाओ ॥ २१३

१–७–१०. कालक्रमेण प्ररूढविश्वासयोर्यः प्रकर्षमारोहन्नोपचारादिनाद्रियते स विस्रम्भजः यथा—

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यत्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।

---

(1) ...वीतकण्ठं मम सुतः एकप्रहारविनिपातं । तत् कुलदूषाणि स्नुषे स्तनयोस्तव मध्ये पतति ॥

(2) नयना...........ति उत्सुकपथं प्रवर्तमानाः । इति शिक्ष...........लोचनं भविष्यत्तरुण्यः ॥

(3) गृहिण्या अकृत .... प्रियतमे कुर्वति । अकृतार्थाया अपि जातानि झटिति शिथिलानि अङ्गानि ॥

(4) मामि हृदयमिव पीतं तेन यूना मज्जंत्याः । स्नानहरिद्राकटुकं अनुस्रोतोजलं पिबता ॥

(5) लज्जा त्यक्ता शीलं च खण्डितं अयशोघोषणा दत्ता । यस्य कृते ननु प्रियसखि स एव जनो जनो जातः ॥

कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत् प्रार्थ्यते ॥ २१४

१–७–११. सोऽपि द्विधा मुग्धः प्रगल्भश्च. मुग्धो यथा—

(1)जह जह जरापरिणओ होइ पई दुग्गओ विरूओ अ ।
कुळवाळिआण तह तह अहिअअरं वळहो होइ ॥ २१५

१–७–१२. प्रगल्भो यथा—

(2)णाअरिआपेम्म वि अण्णो विसब्भावमेत्तसाराइ ।
कण्हो राहाए समुम्मुजुआइ भरइच्चिअआळं ? ॥ २१६

१–७–१३. प्रभेदतः सहजयौवनजः सहजाहार्यजः सहजविस्रम्भजः यौवनजाहार्यजः यौवनजविस्रम्भजः आहार्यविस्रम्भजः इति. तत्रसहजयौवनजो यथा—

तदा किञ्चित्किञ्चित्कृतपदमहोभिः कतिपयैः
तदेतद्विस्तारि स्तनयुगलमासीन्मृगदृशः ।
वयस्स्नेहाकूतव्यतिकरघनो यत्र मदनः
प्रगल्भव्यापारश्चरति हृदि मुग्धश्च वपुषि ॥ २१७

१–७–१४. सहजाहार्यजो यथा—

तन्मे मनः क्षिपति यत्सरसप्रहार-
मालोक्य मामगणितस्खलदुत्तरीया ।
त्रस्तैकहायनकुरङ्गविलोलदृष्टि-
राश्लिष्टवत्यमृतसंवलितैरपाङ्गैः ॥ २१८

---

(1) यथा यथा जरापरिणतो भवति पतिः दुर्गतो विरूपश्च । कुलपालिकानां तथा तथा अधिकतरं वल्लभो भवति ॥

(2) नागरिकाप्रेम....पि अन्यो......? सद्भावमात्रसाराणि । कृष्णो राधाया.......................... ॥

१–७–१५. सहजविस्रम्भजो यथा—

इतः परानर्भकहार्यशस्त्रान्
　वैदर्भि पश्यानुमता मयाऽसि ।
एवंविधेनाहववचेष्टितेन
　त्वं प्रार्थ्यसे हस्तगता ममेभिः ॥　२१९

१–७–१६. यौवनजाहार्यजो यथा—

[1]अज्ज कइमो वि दिअहो वाहवहू गरुअजोव्वणुंमइआ ।
सोहग्गं धणुरुंपच्छळेण रच्छासु विक्किरइ ॥　२२०

१–७–१७. यौवनजविस्रम्भजो यथा—

[2]तह सोह्लाए पुळोइओ दरबळिअंतद्धतारअं पहिओ ।
जह धाडओ वि घरसामिएण ओलिन्दए वसिओ ॥　२२१

१–७–१८. आहार्यविस्रम्भजो यथा—

अद्य प्रभृत्यनुपमाङ्गि तवास्मि दासः
　क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
　क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥　२२२

१–७–१९. संभेदतो निस्सहजो निर्यौवनजः निराहार्यजः निर्विस्रम्भज इति.
　निस्सहजो यथा—

रम्भोरु संहर भयं क्षमते विकार-
　मुत्कम्पितस्तनभरस्य न मध्यभागः ।
इत्थं त्वयैव कथितप्रणयप्रसाद-
　सङ्कल्पनिर्वृतिषु संस्कृत एष दासः ॥　२२३

---

(1) अद्य कतमोऽपि दिवसो व्याधवधू रूपयौवनोन्मत्ता । सौभाग्यं धनुस्त्वक्छलेन रथ्यासु विकिरति ॥

(2) तथा स्नुषया प्रलोकितो दरवलमानार्धतारकं पथिकः । यथा (वारितोऽपि) गृहस्वामिनाऽलिन्दे उषितः ॥

१–७–२०. निर्यौवनजो यथा—

तत्क्षणं विपरिवर्तितह्रियो-
नैष्यतोः शयनमिद्धरागयोः ।
सा बभूव वशवर्तिनी द्वयोः
शूलिनस्सुवदना मदस्य च ॥ २२४

१–७–२१. निराहार्यजो यथा—

मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अद्यापि किं सखि न भाजनमीदृशानां
वैरी न चेद्भवति वेपथुरन्तरायः ॥ २२५

१–७–२२. निर्विस्रम्भजो यथा—

अद्योर्जितं विजितमेव मया किमन्य-
दस्योत्सवः फलवतो मम यौवनस्य ।
यस्य प्रसादसुमुखेन समुद्धृतेयं
देवेन बान्धवधुरा मकरध्वजेन ॥ २२६

१–७–२३. विभेदः सहजादिसमूहः सहजामि? विपर्ययज इति तत्राद्यो यथा—

भावसूचितरहस्यविक्रियं
चाटुमत् क्षणवियोगकातरम् ।
कैश्चिदेव दिवसैस्तथा तयोः
प्रेम रूढमितरेतराश्रयम् ॥ २२७

१–७–२४. द्वितीयो यथा—

(1)पाअपडिअं अहव्वे किं दाणिँ ण उट्ठवेसि भत्तारं ।
एअं विअ अवसाणं दूरं पि गअस्स पेम्मस्स ॥ २२८

(1) पादपतितमभव्ये किमिदानीं नोत्थापयसि भर्तारम् । एतदेवावसानं दूरमपि गतस्य प्रेम्णः ॥

अथ १—८. कृत्रिमः. पूर्वमविद्यमानः कार्यहेतोर्य उपायैः प्रवर्त्यते स कृत्रिमः. सोऽपि २४ चतुर्विंशतिप्रकारः —

| | | |
|---|---|---|
| १. नित्यानुकारी | ९. आहार्यानुकारी | १७. सप्रयोजनः |
| २. नैमित्तिकानुकारी | १०. विस्रम्भानुकारी | १८. अन्यप्रयोजनः |
| ३. सामान्यानुकारी | ११. सालम्बनः | १९. सप्रातिभेदः |
| ४. विशेषानुकारी | १२. निरालम्बनः | २०. निष्प्रातिभेदः |
| ५. प्रकाशानुकारी | १३. प्रसिद्धविषयः | २१. स्त्रीकृतः |
| ६. प्रच्छन्नानुकारी | १४. अप्रसिद्धविषयः | २२. पुरुषकृतः |
| ७. सहजानुकारी | १५. सुप्रयुक्तः | २३. उभयकृतः |
| ८. यौवनजानुकारी | १६. दुष्प्रयुक्तः | २४. अनुभयकृतः |

इति.

१–८–१. तत्र नित्यानुकारी यथा—

(1)अज्ज सुरअंमि पिअसहि तस्स विळक्खत्तणं हरंतीए ।
अकअत्थाए कअत्थो पिओ मए उणिअ? मवऊढो ॥ २२९

१–८–२. नैमित्तिकानुकारी यथा—

तमसौ सहकारमञ्जरीमवमन्वानमिवादरार्पिताम् ।
अरुणाग्रदलैरताडयत्तरुणी स्तोकमशोकपल्लवैः ॥ २३०

१–८–३. सामान्यानुकारी यथा—

(2)माअंगी होज्ज वणे मा वेसा एत्थ माणुसे ळोए ।
सब्भावेण वि रमिओ तो वि जणो कत्तिमं भणइ ॥ २३१

१–८–४. विशेषानुकारी यथा—

विकसत्कलिकानुकारिणीं
अनुलीलां ललितैर्लतेव सा ।

(1) अद्य सुरते प्रियसखि तस्य विलक्षत्वं हरन्त्या । अकृतार्थया कृतार्थः प्रियःमया (पुनरप्यु)पगूढः ॥

(2) मातंगी भवेयं (निश्चयेन)* मा वेश्या अत्र मानुषे लोके । सद्भावेनापि रमितः ततोपि जनः कृत्रिमं [भणति ॥

* “वणे निश्चयानुकंप्य विकल्पे” २—१—४३ सूत्रं वाल्मीकीयम्.

विरराज विलासपल्लवैः
प्रवगल्भं प्रविनिष्फलैरपि ? ॥ २३२

१–८–५. प्रकाशानुकारी यथा—

दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मिन् गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वनमितः स्रोतस्तमालाकुलं
नीरन्ध्राः पुनरालिखन्तु जरठच्छेदा नलग्रन्थयः ॥ २३३

१–८–६. प्रच्छन्नानुकारी यथा—

(1)किं णीळकण्ठ गच्छसि किं वा सुत्तोऽसि जणमणाणंद ।
तुज्झ कए इह आआ विद्धाहं मअणबाणेहिं ॥ २३४

१–८–७. सहजानुकारी यथा—

स्फुटनाभितला तलोदरी
निरनुच्छ्वासितनिर्मुखस्तनी ।
वलितैकविलोचना बभौ
तमदि ? व्याजविजृम्भितोङ्कुजा ॥ २३५

१–८–८. आहार्यानुकारी यथा—

विषयादविशेषविह्वला
मुमुदे मीलितलोचना मुहुः ।
किलिकिञ्चितकेलिपाण्डिता
किमकाण्डे न चकार तं प्रति ॥ २३६

१–८–९. यौवनजानुकारी यथा—

वपुरप्रतिकर्मसुन्दरं
प्रतिपन्नप्रतिकर्म बिभ्रती ।

---

(1) किं नीलकण्ठ गच्छसि किं वा सुप्तोऽसि जनमनआनन्द । तव कृते इह (आगता) विद्धाऽहं मदनबाणैः ॥

विततान विदग्धकामिनी
जनयोग्यं (ग्या) सु कलासु कौशलम् ॥ २३७

१—८—१० विस्रम्भजानुकारी यथा—

अवलम्ब्य लतां निरायता मथ सा संस्तवशालिनी वनम् ।
अपचेतुमयाचताग्रतः कलिकामुत्कलिकाबलात्कृता ॥ २३८

१—८—११ सालम्बनो यथा—

(1) घरसामिअस्स राअं जणेइ सिज्जंतवेविरुल्लसिआ ।
असई हिअअब्भंतरभाविअजारा णिहुवणंमि ॥ २३९

१—८—१२ निरालम्बनो यथा—

निषसाद निशीथमल्लिकाशिथिलाश्रुस्तबकांचितस्तनी ।
तदनु क्रमशः कपोलयो-रुपनीतोभयपाणिपल्लवा ॥ २४०

१—८—१३ प्रसिद्धविषयो यथा—

(2) णंदंतु सुरअसरहसतण्हावहराइ सअल्लोअस्स ।
बहुरंगविणिम्मविआइ वेसविळआण हिअआइं ॥ २४१

१—८—१४ अप्रसिद्धविषयो यथा—

(3) पेच्छह हळा अ वोच्चं ताण अ महिळाए जं कअं तीए ।
सज्जक्खिचुंबणे णथ्थदंति? णीसारिओ जारो ॥ २४२

१—८—१५ सुप्रयुक्तो यथा—

(4) एएणं चेअ गुणेण किं वेसाण दिज्जए अप्पा ।
वेसे व्व पिए व्व जणे जं मुहुराओ समो च्चेअ ॥ २४३

---

1. गृहस्वामिनो रागं जनयति स्विद्यद्वेपितोल्लसिता । असती हृदयाभ्यन्तर भावितजारा निधुवने ॥
2. नन्दन्तु सुरतसरभसतृष्णापहराणि सकललोकस्य । बहुरंगविनिर्मितानि वेशवनितानां हृदयानि ॥
3. प्रेक्षध्वं हळावक्ष्यंतेषां महिलया यत्कृतं तया ।........चुंबने............इति निस्सारितोजारः ॥
4. एतेनैव गुणेन किं न वेश्यानां दृश्यते आत्मा । वेष इव प्रिय इव जने यन्मुखरागस्सम एव ॥

१–८–१६ दुष्प्रयुक्तो यथा—

मुनिमभिमुखतां निनीषवो ये
समुपययुः कमनीयतागुणेन ।
मदनमुपदधे त एव ताभ्यो
दुरधिगमाधि(हि)गतिः प्रयोजनानाम् ॥ २४४

१—८—१७ सप्रयोजनो यथा—

(1) वोढपरेण वि तह केण रामिआ णिअअकज्जणिउणेण ।
जह मुध्धाए वि रमिओ मुद्धात्ति वहूए णीसंकं ॥ २४५

१—८—१८ अन्यप्रयोजनो यथा—

मात्र करिष्यसि खेदं निष्ठुरमुक्तोसि यन्मया सुभग ।
यूनां हि रक्ततरुणीपरुषवचः प्रथममाभरणम् ॥ २४६

१—८—१९ सप्रतिभेदो यथा—

(2) उण्हाइ णीसमंतो आलिंगासि मं पराहुत्तीं ।
हिअअं पळीविअं अणुसएण पुट्ठिं पळीवेसि ॥ २४७

१—८—२० निष्प्रतिभेदो यथा—

(3) अफडेण उपकंपितेण कज्जस्स अंतगमणेण ।
सुरअरहस्सेण हरंति जेण हिअआइ वेसाओ ॥ २४८

१—८—२१ खीकृतो यथा—

(4) काउण धीरजहणं पज्जत्तरआए वेसविळआए ।
तह कह वि पुळइअं जह पुणो वि मअणो उवट्ठित्रिओ ॥२४९

1. ....परेणापि तथा केन रमिता निजकार्यनिपुणेन । यथा मुग्धयापि रमितो मुग्ध इति वध्वा निश्शंकं ॥
2. उष्णानि निश्वसन् आलिंगासि किमिति मां पराङ्मुखीं । हृदयं प्रदीपितं अनुशायेन पृष्ठं प्रदीपयसि ॥
3. ......................... कार्यस्य अन्तगमनेन । सुरतरहस्येन हरन्ति येन हृदयानि वेश्याः ॥
4. कृत्वा....जघनं पर्याप्तरतया वेश वनितया । तथा कथमपि पुलकितं यथा पुनरपि मदन उपस्थापितः ॥

१—८—२२ पुरुषकृतो यथा—

(1) होंतवरो तह(तह)? हेहिणीए चुडुअंमवावडो होइ।
जह इअसंगोइं हुवंति वारेज्जुदिअहाइं ? ॥ २५०

१—८—२३ उभयकृतो यथा—

(2) धिंगडि थावइ संमुही धीगुवसारइ धाहक्कुट्टणं।
रोवइ अस्सुआहिं धुत्त धुमेळ्ळइ दाह............॥ २५१

१—८—२४ अनुभयकृतो यथा—

(3) उरवेळ्ळिअवइ कारिळ्ळआाइ उच्चेसि दइअवच्छळिए।
कंटअविळहिअपीणुण्णअथाणि उत्तम्म एत्ताहे ॥ २५२

द्वादशैवं सहस्राणि साष्टाशीतिशतद्वयी।
भवन्ति कामश्रृंगारे मूलप्रकृतयः पृथक् ॥
व्यतिषंगादमूषां तु साम्याधिक्याल्पताकृतः।
न पर्यन्तो विकल्पानामेकद्विव्यादियोगतः ॥

चतुःषष्टिं पश्यन्प्रथममभिलाषप्रभृतिका-
नथाष्टौ नित्यादीन्पृथगपि चतुर्विंशातिविधान्।
मिथो मिथ्यासम्यक्समधिकसमत्वानि विमृश-
न्कविः कुर्यात्स्रोतोऽनुगुणमनुरागव्यातिकरम् ॥

इति महाराजाधिराजश्रीभोजदेव विरचिते
श्रृङ्गारप्रकाशेऽनुरागस्थापनो नाम
द्वाविंशः प्रकाशः

---

1. भविष्य... तथा तथा गेहिन्यां चाटुकर्मव्यापृतो भवति...............भवन्ति...........दिवसानि ॥
2. अविशदा गाथा.
3. उरःप्रेरितवृति कारवेल्लीफलान्युच्चिनोषि दयितवत्सले। कण्टकविलिखितपीनोन्नतस्तनि उताम्य इदानीम् ॥

# अथ त्रयोविंशः प्रकाशः

## विप्रलम्भ-सम्भोग प्रकाशनम्.

---

सः अवस्थाद्वितयभेदात् द्विप्रकारः—१. सम्भोगशृङ्गारो, २. विप्रलम्भशृङ्गारश्च.

१. अभिलषणीयालिङ्गनादीनामवाप्तौ सम्भोगः स चतुर्धा–

| | |
|---|---|
| १–१. प्रथमानुरागानन्तरः | १–३. प्रवासानन्तरः |
| १–२. मानानन्तरः | १–४. करुणानन्तरः इति. |

२. तेषामेवानवाप्तौ विप्रलम्भः सोऽपि चतुर्धा–

| | |
|---|---|
| २–१. प्रथमानुरागः | २–३. प्रवासः |
| २–२. मानः | २–४. करुणः इति· |

२–१. ततः स्त्रीपुंसयोः परस्परमपूर्वादिदर्शनश्रवणजन्मा रूपगुणवयस्सम्पदुपकारापेक्षः तदनपेक्षो वा मनः पक्षपातविशेषः प्रथीयान् प्रथमानुरागो विप्रलम्भः

१–१. सति चैतस्मिन् तयोरेव प्रथमसङ्गमादौ अभिलषणीयालिङ्गनादिलाभ प्रथमानुरागानन्तरः सम्भोगः.

२–२, १–२ *

२–३. सत्यनुरागे दैवदुर्विपाकादिजन्मा तयोः विदूरदेशवासः प्रवासः विप्रलम्भः

१–३. तदभिवृद्धौ प्रवृद्धोत्कण्ठयोरेव भूयस्समागमे अभिलाषादिनिष्पत्तिः प्रवासानन्तरस्सम्भोगः.

१–४. प्ररूढस्नेहयोरेकविनिपाते अन्यस्य दुःखातिरेकः हृदयदारणः करुणः विप्रलम्भः

१–४. तयोरेवादृष्ट विशेषादिसम्पदा तदुन्मज्जनजन्मा मनःप्रमोदातिशयः विशेषवान् करुणानन्तरः सम्भोगः इति-

प्रथमानुरागादीनां विप्रलम्भानां तदनन्तराणां च सम्भोगानां पृथक्पृथक् चतुर्णां समवाये पूर्वःपूर्वो विचित्रःपर परो रागवर्धनःइति.

वैचित्र्ये रागवर्धनत्वेनापि विप्रलम्भः सम्भोगात् सर्वतः सर्वो बलीयान् इति-

---

* अत्र मान मानान्तरसम्भोगनिर्वचनग्रन्थः मातृकायां न दृश्यते.

एवं नित्यान्नैमित्तिकः, सामान्याद्विशेषः, प्रकाशात्प्रच्छन्नः, कृत्रिमादकृत्रिमः, रागवर्धने; वैचित्र्ये तु अकृत्रिमात्कृत्रिमः, प्रच्छन्नात् प्रकाशः, विशेषात्सामान्यः, नित्यान्नैमित्तिकः बलीयान् इति.

नित्यसामान्यप्रकाशकृत्रिमाणां पूर्व,पूर्वो रागवर्धनः, पर परो विचित्रः इति.

नैमित्तिकविशेषप्रच्छन्नाकृत्रिमाणां पूर्वः पूर्वो विचित्रः परः परः परो रागवर्धनः इति.

एवं मृदोश्वादुः समीचोऽतिशायी, वासन्ताद्वार्षिकः, प्रासादिकाम्मदजः, समयजन्मनस्सम्बन्धजन्मा(*)गुणगोचरः, साधारणादसाधारणः, सांसर्गिकान्नैसर्गिक, प्रौढाविषयान्नवोढाविषयः, प्रोषितपतिकाविषयाद्विरहोत्कण्ठिताविषयः, स्वांगनाविषयात्परांगनाविषयः, सुलभाद्दुलभः, आहार्याद्विस्रम्भजः, नित्यानुकारिणो नैमित्तिकानुकारी, प्रकाशानुकारिणः प्रच्छन्नानुकारी, बलीयान् इत्यादिप्रभेदेषु क्रमेण रागवर्धनत्वे व्यतिरेकेण तु वैचित्र्ये ( त्यत्रापि ? ) यथायथं योजनीयमिति (*) ( द्रव्यगोचरात् )

प्राक्प्रपञ्चितानुरागानुरूपाश्च प्रथमानुरागमानप्रवासकरुणविप्रलम्भाः, तदानन्तर्यानुकारिणश्च तदनन्तरा स्सम्भोगाः, भावजन्मानुबन्धप्रकर्षानुरूपास्तदवस्थासमृद्धयः. नायकप्र(कृ)त्यनुरूपास्तदनुभावसम्पदः, उत्तमत्वमुग्धत्वाद्यनुरूपाणि तेषां रामणीयकादीनि, बलाबलानुरूपास्सम्पर्कानुगमभक्तय; संविधानकानुरूपास्तेषां संविधयः, सन्निकर्षविप्रकर्ष प्रकर्षापकर्षवत्यो व्यतिकरप्रकृप्तयः इति.

तत्र सम्भोगः—

| | | |
|---|---|---|
| १. स्वाङ्गनाविषयः | ५. मध्यमाविषयः | ९. प्रगल्भाविषयः |
| २. पराङ्गनाविषयः | ६. कनिष्ठाविषयः | १०. सर्वविषयः |
| ३. सामान्याविषयः | ७ मुग्धाविषयः | ११. सर्वकालविषयः |
| ४. उत्तमाविषयः | ८. मध्याविषयः | १२. सर्वर्तुचर्याविषयः |

इत्येवमादिरनेकप्रकारः तत्प्रत्यनीकतया विप्रलम्भोऽपि तावत्प्रकार एव. केवलमस्य प्रथमानुरागादिषु पूर्वकालभाविता, सम्भोगस्य तदनन्तरकालभाविता इति विशेषः.

१—१. तत्र सम्भोगः स्वाङ्गनाविषयो यथा—

(1) आणासआइ देंती तह सुरए हरिसविअसिअकवोला ।
गोसे वि ओणअमुही असत्तेत्ति पिआं ण सद्दहिमो १

1. आज्ञाशतानि ददती तथा सुरते हर्षविकसितकपोला। प्रभातेऽप्यवनमुखीं असौ सेति प्रियां न श्रद्दध्मः॥

१—२. पराङ्गनाविषयो यथा—

(1) मुहविज्झविअपईवं ऊससिअणिरुद्धसंकिउल्लावं ।
सवहसअरक्खिओट्ठं चोरिअरमिअं सुहावेइ ॥ २

१—३. सामान्याविषयो यथा—

यथायथं ताः सहिता नभश्चरैः
प्रभाभिरुद्भासितशैलवीरुधः ।
वनं विशन्त्यो वनजायतेक्षणाः
क्षणद्युतीनां दधुरेकरूपताम् ॥ ३

१—४. उत्तमाविषयो यथा—

(2) हरिसुल्लावा कुलपालिआण लज्जाकडच्छिए सुरए ।
कंठब्भंतरभमिआ अहरे च्चिअ हुरुहुराअंति ॥ ४

१-५. मध्यमाविषयो याथा—

(3) सुरआवसाणविळिओणआओ सेउल्लवअणकमलाओ ।
अद्धच्छिपेच्छिरीओ पिआओ धण्णा पुळोअंति ॥ ५

१—६. कनिष्ठाविषयो यथा—

(4) पज्जत्तंमि वि सुरए विअलिअबंद्धं अ संजमंतीए ।
विब्भमहसिएहिं कओ पुणो वि मअणाउरो दइओ ॥ ६

१—७. मुग्धाविषयो यथा—

(5) पोढमहिळाण जं जं सुसिक्खिअं तं रए सुहावेइ ।
जं जं असिक्खिअं णववहूण तं तं रइं देइ ॥ ७

---

1. मुखनिर्वापितप्रदीपं उच्छ्वसितनिरुद्धशंकितोल्लापं । शपथशतरक्षितोष्ठं चौर्यरमितं सुखयति ॥
2. हर्षोल्लापाः कुलपालिकानां लज्जाकदर्थिते सुरते । कण्ठाभ्यन्तरभ्रमिता अधर एव हुरुहुरायन्ते ॥
3. सुरतावसानविलीनाः स्वेदार्द्रवदनकमलाः । अर्धाक्षिप्रेक्षणशीलाः प्रियाः धन्याः पश्यन्ति ॥
4. पर्याप्तेऽपि सुरते विगलितबन्धं च संयमयन्त्या । विभ्रमहसितैः कृतः पुनरपि मदनातुरो दयितः ॥
5. प्रौढमहिलानां यद्यत् सुशिक्षितं तद्रते सुखयति । यद्यदशिक्षितं नववधूनां तत्तद्रतिं ददाति ॥

१–८. मध्यमाविषयो यथा--

(1) परिओसआह्मि सहिंताह्मि गाढपरिरंभमामुअंतांमि ।
अणुमग्गसमूससणाणुबंधफंसेहिं थणएहिं ॥ ८

१–९. प्रगल्भाविषयो यथा–

(2) सब्भावगब्भिणं पाअडंति तह किं वि वम्महरहस्सं ।
रमणीओ जह ण विरमंति पत्तसोक्खाइ वि रआइं ॥ ९

१–१०. सर्वविषयो यथा–

(3) घेत्तुं मुंचइ अहरा अण्णत्तो वळइ पेच्छिउं दिट्ठी ।
घडिउं व्विहडंति भुआ रअम्मि सुरआअवीसामो ॥ १०

१--११. सर्वकालविषयेषु प्रभातविषयो यथा–

निद्राविनोदितनितान्तरतक्लमाना-
मायामिमङ्गलनिनादविबोधितानाम् ।
रामासु भाविविरहाकुलितासु यूनां
तत्पूर्वतामिव समादधिरे रतानि ॥ ११

१–१२. सर्वर्तुचर्याविषयेषु वसन्तचर्याविषयो यथा–

(4) दइअकअग्गहलुळिओ धम्मिळ्ळो सीहुगंधिअं वअणं ।
णअणं पि एत्तिअं चिअ पसाहणं हसइ तरुणीणं ॥ १२

१–१३. ग्रीष्मविषयो यथा--

(5) दइअस्स गिम्मवम्महसंदावं दो वि झत्ति अवणेइ ।
मज्जणजळल्धचंदणासिसिरा आळिंगणेण वहू ॥ १३

---

1. परितोषे......गाढपरिरम्भ मामुञ्चति ? । अनुमार्गं संमुच्छ्वासानुबन्ध स्पर्शाभ्यां स्तनाभ्यम् ॥
2. सद्भावगर्भितं प्रकटयन्ति तथा किमपि मन्मथरहस्यं । रमण्यो यथा न विरमन्ति प्राप्तसौख्यान्यपि रतानि ॥
3. गृहीतुं मुच्यते अधरः अन्यतो वलति प्रेक्षितुं दृष्टिः । घटितुं विघटेते भुजौ रते सुरताय विश्रामः ॥
4. दयितकचग्रहलुलितो धम्मिल्लश्शीधुगन्धि वदनं । नयनमप्येतावदेव प्रसाधनं हसति तरुणीनाम् ॥
5. दयितस्य ग्रीष्ममन्मथसन्तापं द्वयमपि झटित्यपनयति । मज्जनजलार्द्रचन्दनशिशिरा आलिंगनेन वधूः॥

१-१४. वर्षर्तुविषयो यथा--

धारानिपातरवबोधितपञ्जरस्थ-
दात्यूहडम्बरकरम्बितकण्ठकूजाः ।
अट्टेषु काण्डपटवारितशीकरेषु
धन्याः पिबन्ति मुखतामरसं तरुण्याः ॥ १४

१-१५. शरच्चर्याविषयो यथा--

(1) कळहोओज्जळगोरं कळहोअसिआसु सरअराईसु ।
चुंबंति विआसिअच्छं विअद्धजुवईमुहं धण्णा ॥ १५

१-१६. हेमन्तविषयो यथा —

(2) हेमंते दढवीळण.... पडसंकंतकुंकुमुंतिसो ।
मिहुणाण गळइ सेओ बहिरुग्गारो व्व सीअस्स ॥ १६

१-१७. शिशिरचर्याविषयो यथा—

(3) किं तस्स पावरेणं किमग्गिणा किं व गब्भघरएण ।
जस्स उरम्मि णिसम्मइ उम्हाअंतत्थणी जाआ ॥ १७

१-१८. आदिग्रहणात्प्रकीर्णविषयो यथा –

मधु च विकसितोत्पलावतंसं
शशिकरपल्लवितं च सौधपृष्ठं ।
मदनजनितविभ्रमा च कान्ता
सुखमिदमर्थवतां विभूतयोऽन्याः ॥ १८

1. कलधौतोज्वलगौरं कलधौतसितासु शरद्रात्रिषु । चुम्बन्ति विकासिताक्षं विदग्धयुवतीमुखं धन्याः ॥

2. हेमन्ते दढपीडन........ पुटसङ्क्रान्तकुङ्कुम........ । मिथुनानां गलति स्वेदो बहिरुद्गार इव शीतस्य ॥

3. किं तस्य प्रावारेण किमग्निना कि वा गर्भगृहेण । यस्योरसि निषीदति ऊष्मायमाणस्तनी जाया ॥

अथ विप्रलम्भः. सोऽपि सम्भोगवदेव.

२–१. स्वाङ्गनाविषयो यथा —

(1)पिआआडंबं देइ गहवई? पुळअसेअसंवळिआ ।
अज्जे अ तस्स दिट्ठी पडिपळिहिइ एद्ध बिंबम्मि ॥ १९

२–२. परकीयाविषयो यथा —*

(2)अप्पत्तदंसअत्तम्मिरीए बाळअ तुमंमि बोळीणे ।
पइपुरओ च्चिअ सासे सिहिस्विंडखंडेहि णीससिअं? ॥ २०

२–३. सामान्याविषयो यथा—

(3)मण्णुब्भरिआ ण रुअइ संदिसइ ण णेहणब्भरिसिअं ति? ।
† . . . . . . . . . . . . . . . . . . . . . . . ॥ २१

‡उअरि भरेण अ अण्णुअ मुअइ वइळ्ळो वि अंगाइ ॥ २२

§(२–४) (२–५) (२–६) —

---

(1) प्रिया....ददाति गृहपति....पुलकस्वेदसंवलिता । अद्य च तस्य दृष्टिः प्रतिफलिष्यति अत्र बिंबे ? ।

* संभोगनिर्दिष्ट क्रमानुरोधेन अत्रापि पराङ्गनाविषयः इति चेदनुरूपाण्यक्षराणि ॥

(2) अप्राप्तदर्शनोत्तमन शीलाया बालक त्वय्यपक्रान्ते । पति पुर एव........निश्वसितम् ॥

(3) मन्युभरितानरोदिति सन्दिशति न स्नेह...... ।

† अस्य उत्तरार्धस्य स्थाने "उअरिभरेण" इत्यर्धं अविभागेन लिखितं मातृकायाम् । नैतदस्या गाथायाः उत्तरार्धं । प्रत्युत अन्यस्याः अतः तत्स्थाने त्रुटिचिह्नं निवेशितम्.

‡ "उअरि" इत्यस्य पूर्वार्धं यथा-शातवाहन गाथाकदंबके—"ऊहसि पिआए समअं तह वि खु मं भणसि कीस किसिअत्ति । इति । छाया—उह्यसे प्रियया समं तथापि खलु मां भणासि कस्मात्क्रशेति । उपरि भरेण च अज्ञ मुञ्चति बलीवर्दोप्यङ्गानि ॥

§ अत्र संभोगप्रभेदानुगुण्येन विप्रलंभप्रभेदोपि प्रतिज्ञातः । तथैव १-२-३ इति प्रभेदत्रयं उदाहरणेन निरूपितं । इत उत्तरं निरूपयिष्येषु प्रभेदेषु २-४ उत्तमाविषयः, २-५ मध्यमाविषयः, २-६ कनिष्ठाविषयः इति त्रयाणां प्रभेदानां उदाहरणपद्यानि गलितानि । तद्गमकचिह्नमपि न किंचिदस्ति मातृकायाम् । इदमन्यदत्रावधेयं । यदुत २-३ सामान्याविषयस्य उदाहरणतया दृश्यमानं "मण्णुभरिआ" इति गाथार्धं न तस्य समंजसं भवति यदपि "उअरिभरेण" इति गाथार्धं असंबद्धं लिखितं तत् गलित विप्रलंभप्रभेदोदाहरण गाथासु अन्यतमगाथाया उत्तरार्धं लेखकप्रमादात् अत्र स्यन्दानितं भवेत् अत्र वक्तव्यमन्यत् परिशिष्टे निरूपयिष्यते ॥

२–७. मुग्धाविषयो यथा—

(1)कइ आगओ पिओ अज्ज पुत्ति अ(क)ज्जेण कइ दिणा होंति ।
एक्को एद्दहमेत्तं भणिउं मोहं गआ बाळा ॥ २३

२–८. मध्यमाविषयो यथा—

(2)तणुआइआ वराई दिअहेदिअहे मिअंकळेहव्व ।
बहुळपओसेण व तुए णिसंस अंधारिअमुहेण ॥ २४

२–९. प्रगल्भाविषयो यथा—

(3)सअणे चिंतामइअं काऊण पिअं णिमीळअच्छीए ।
अप्पाणो उवऊढो पसिढिळवळआहि बाहेहिं ॥ २५

२–१०. सर्वविषयो यथा—

(4)अंगाइ किळामिज्जंति झोविरज्जंति ? णिज्झविज्जंति ।
कव्ळोळिज्जंति जणस्स वि अ दुळ्ळहे जणे दिट्ठे ॥ २६

२–११. *प्रभातविषयो यथा—

गतवति नखलेखालक्ष्यतामङ्गरागे
समददयितपीताताम्रबिम्बाधरोष्ठ्याः ।
विरहविधुरमिष्टा सत्सखीवाङ्गनायाः
हृदयमवललम्बे रात्रिसम्भोगलक्ष्मीः ॥ २७

---

(1) कदाआ गतः प्रियः अद्य पुत्रि आ(का)र्येण कति दिनानि भवन्ति । एकः एतावन्मात्रं भणित्वा मोहं [गता बाला ॥

(2) तनुकायिता वराकी दिवसेदिवसे मृगाङ्कलेखेव । बहुलप्रदोषेण त्वया नृशंस अन्धकारितमुखेन ॥

(3) शयने चिन्तामयं कृत्वा प्रियं निमीलिताक्ष्या । आत्मा उपगूढः प्रशिथिलवलयाभ्यां बाहुभ्याम् ॥

(4) अङ्गानि क्लाम्यन्ति.................................. । कल्लोलयन्ति जनस्यापि च दुर्लभे जने दृष्टे ॥

* "सर्वकालविषयेषु प्रभातविषयो यथा" इति संभोगप्रभेदनिरूपणे (पु ५५-१-११) अत्रापि तथा क्षरन्यासस्साधुः ।

२–१२(क). *वसन्तचर्या यथा—

[1]खेमं कंतो खेमं जो सो कुज्जंबओ घरद्दारे ।
तस्स किळ मज्झआओ को वि अणत्थो समुप्पण्णो ॥ २८

२–१२(ख). ग्रीष्मचर्याविषयो यथा—

[2]गिम्मं गमेइ कह कह वि विरहसिहितापिआपि पहिअवहू ।
अविरळपडंतणिब्भरवाहजळोळ्ळावरिळ्ळेण ॥ २९

२–१२(ग). वर्षर्तुचर्याविषयो यथा—

[3]अज्ज मए तेण विणा अणुहूअसुहाइ सम्हरंतीए ।
अहिणवमेहाण रवो णिसामिओ वज्झपडहोव्व ॥ ३०

२–१२(घ). शरच्चर्याविषयो यथा—

[4]सुप्पउ तइओ पि गओ जामोत्ति सहीओ कीस मं भणह ।
सेहाळिआण गंदो ण देइ सोत्तुं सुअह तुम्हे ॥ ३१

२–१२(ङ). हेमन्तचर्याविषयो यथा—

[5]हेमंते हिमरअधूसरस्स ओअसरणस्स पहिअस्स ।
सुमरिअजाआमुहासिच्चिरस्स सीअं चिअ पणट्ठं ॥ ३२

२–१२(च). शिशिरचर्याविषयो यथा—

[6]तरळच्छि चंदवअणे पीणत्थणि करिकरोरु तणुमज्झे ।
दीहा वि समप्पइ सिसिरजामिणी कह णु दे माणो ॥ ३३

---

* 'सर्वर्तुचर्याविषयेषु वसन्तचर्याविषयो यथा" इति (पुटे ५५-१-१२) एवमेवात्रापि पाठः रमणीयः ।

(1) क्षेमं कुतः क्षेमं योऽसौ कुब्जाम्रको गृह द्वारे । तस्य किल मस्तकात्कोप्यनर्थस्समुत्पन्नः ॥

(2) ग्रीष्मं गमयति कथं कथमपि विरहशिखितापितापि पथिकवधूः । अविरलपतन्निर्भरबाष्पजलार्द्रोत्तरीयेण॥

(3) अद्य मया तेन विना अनुभूतसुखानि संस्मरन्त्या । अभिनवमेघानां रवो निशमितो वध्यपटह इव ॥

(4) स्वप तृतीयोऽपि गतो याम इति सख्यः कस्मान्मां भणथ । शेफालिकानां गन्धो न ददाति स्वप्तुं [स्वपत यूयम् ॥

(5) हेमन्ते हिमरजोधूसरस्य ओजश्शरणस्य पथिकस्य । स्मृतजायामुखखेदशीलस्य शीतमेव प्रनष्टम् ॥

(6) तरलाक्षि चन्द्रवदने पीनस्तनि करिकरोरु तनुमध्ये । दीर्घापि समाप्यते शिशिरयामिनी कथं नु ते मानः ॥

२–१२(छ). आदिग्रहणात्प्रकीर्णविषयो यथा—

विलिम्पत्येतस्मिन्मलयजरसार्द्रेण महसा
दिशां चक्रं चन्द्रे सुकृतमयि तस्या मृगदृशः ।
दृशोर्बाष्पः पाणौ वदनमसवः कण्ठकुहरे
हृदि त्वं ह्रीः पृष्ठे वचसि च गुणा एव भवतः ॥ ३४

प्रथमानुरागादीनामनन्तराणां च विस्तरतः प्रपञ्चमग्रतः क्रमेण वर्णयिष्यामः । इह तु दिङ्मात्रमुपलक्षणार्थमुदाह्रियते.

तत्र १. प्रथमानुरागो यथा—

(1)अविअण्णपेच्छणिज्जेण तक्खणं मामि तेण दिट्ठेण ।
सिविणअपीएण व पाणिएण तण्हा चिअ ण णट्ठा ॥ ३५

१–१. प्रथमानुरागानन्तरो यथा—

पाणिपीडनविधेरनन्तरं
शैलराजदुहितुर्हरं प्रति ।
भावसाध्वसपरिग्रहादभू-
त्कामदोहदमनोहरं वपुः ॥ ३६

२. मानो यथा—

कपोले पत्त्राली करतलनिरोधेन मृदिता
निपीतो निश्वासैरयममृतहृद्योऽधररसः ।
मुहुर्लग्नः कण्ठे तरलयति बाष्पस्स्तनतटीं
प्रियो मन्युर्जातस्तव निरनुरोधेन तु वयम् ॥ ३७

---

(1) अवितृष्णप्रेक्षणीयेन तत्क्षणं मामि तेन दृष्टेन । स्वप्नपीतेनवे पानीयेन तृष्णैव न नष्टा ॥

२–१. मानानन्तरो यथा—

पौलस्त्यपीनभुजसम्पदुदस्यमान-
कैलाससम्भ्रमविलोलदृशः प्रियायाः ।
श्रेयांसि वो दिशतु निर्हृतकोपचिह्न-
मालिङ्गनोत्पुलकमासितमिन्दुमौलेः ॥ ३८

३. प्रवासो यथा—

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै-
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणार्धरुद्धवसुधः कृत्वाश्रुपूर्णे दृशौ
तामाशां पथिकस्तथापि किमपि ध्यायन् मुहुर्वीक्षते ॥ ३९

३–१. प्रवासानन्तरो यथा—

आयाते दयिते मरुस्थलभुवां सञ्चिन्त्य दुर्लङ्घ्यतां
गेहिन्या परितोषबाष्पतरलामासज्य दृष्टिं मुखे ।
दत्वा पीलुशमीकरीरकबलान् स्वेनाञ्चलेनादरा
दुन्मृष्टं करभास्य केसरसटाभाराग्रलग्नं रजः ॥ ४०

४. करुणो यथा—

यस्याः कुसुमशय्यापि कोमलाऽस्या रुजाकरी ।
साधिशेते कथं देवी हुताशनवतीं चिताम् ॥ ४१

४–१. करुणानन्तरो यथा—

भवति विततश्वासोन्नाहप्रणुन्नपयोधरं
हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम् ।
वदनमधिकं मूर्च्छाच्छेदात्प्रसादि विराजते
परिगतमिव प्रारम्भेण श्रिया सरसीरुहम् ॥ ४२

तेषां समवाये पूर्वःपूर्वो विचित्र इति करुणानन्तरात्प्रवासानन्तरो विचित्रः यथा—

दृष्टिर्वन्दनमालिका स्तनयुगं लावण्यपूर्णौ घटौ
शुभ्राणां प्रकरस्स्मितं सुमनसां वक्त्रप्रभा दर्पणः ।
रोमाञ्चोद्गम एष सर्षपकणाः पाणी तथा पल्लवः
स्वाङ्गैरेव गृहं प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥ ४३

प्रवासानन्तरान्मानानन्तरः स यथा—

न स्पृष्टोऽपि त्रिदशसरिता दूरमीर्ष्यानुबन्धा-
न्नाप्युन्मृष्टो भुजगपतिना तर्जनाभिर्जयायाः ।
मानस्यान्ते नयनसलिलैः क्षालितः शैलपुत्र्याः
पत्युर्मौलौ नतिजुषि जयत्यात्मनः पादपांसुः ॥ ४४

मानानन्तरात्प्रथमानुरागानन्तरः स यथा—

दृष्टा दृष्टिमधो दधाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढा प्रिया ॥ ४५

परःपरो रागवर्धन इति प्रथमानुरागानन्तरान्मानानन्तरः. स यथा—

उन्नमय्य सकचग्रहमास्यं
चुंबति प्रियतमे हठवृत्त्या ।
हुं हु मुञ्च ममेति च मन्दं
जल्पितं जयति मानवतीनाम् ॥ ४६

मानानन्तरात्प्रवासानन्तरः स यथा—

(1)सामसाहिप्पम? पिआगमो तीए विरहकिसिआए ।
अच्चंत वहरिसेण वि....जा मआ सा मअच्चेअ ॥ ४७

(1) ...........प्रियागमस्तस्या विरहकृशायाः । अत्यन्तप्रहर्षेण....यामृतासा मृतैव ॥

प्रवासानन्तरात्करुणानन्तरः. स यथा—

आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा बहिरपि वा शरीरधातून् ।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरविधं तनोति मोहम् ॥ ४८

एवं विप्रलम्भेष्वपि करुणः(णात्)प्रवासो विचित्रः. स यथा—

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रुतमविरतोत्कंठमुत्कंठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
संकल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥ ४९

प्रवासान्मानः. स यथा—

*भ्रूभेदो गुणितश्चिरं नयनयोरत्यन्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगःकृतः ।
धैर्यं धर्तुमपि स्थिरीकृतमिदं चेतः कथं चिन्मया
बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थिता ॥ ५०

मानात्प्रथमानुरागः. स यथा—

क्वाकृत्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणामुपशान्तये श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृताधि(यो रेखै)सान्यादृशी
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥ ५१

* भ्रूभेदो रचित;—भ्रूभेदो गुणितः इतिचपाठभेदः.

रागवर्धनत्वेन प्रथमानुरागान्मानः. स यथा –

[1]णूमेंति जे पहुत्तम् कुविअं दासं व्व जे पसाअंति।
ते च्चिअ महिळाण पिआ सेसा सामिच्चिअ वराआ ॥ ५२

मानात्प्रवासः. स यथा —

[2]कळ्ळं किर खरहिअओ वच्च(च)सिहि दइओ त्ति सुव्वइ जणंमि।
तह वड्ढ भअवइ णिसे जह से कळ्ळं चिअ ण होइ ॥ ५३

प्रवासात्करुणः. यथा —

[3]समदुक्खसोक्खपरिवडिढआण काळेण रूढपणआण ।
मिहुणाण मरइ जं तं खु जिअइ इअरं मअं होइ ॥ ५४

वैचित्र्येण रागवर्धनत्वे वा सम्भोगाद्विप्रलम्भो बलीयानिति, तत्र वैचित्र्ये प्रथमानुरागानन्तरात् प्रथमानुरागः स यथा—

इन्दुर्यत्र न निन्द्यते न मधुरं दूतीवचः श्रूयते
नालापा निपतन्ति बाष्पकलुषा नोपैति कार्श्यं वपुः ।
स्वाधीनामनुकूलि(कां)तां स्वगृहिणीमालिङ्ग्य यत्सुप्यते
किं तत्प्रेम गृहाश्रमव्रनमिदं कष्टं समाचर्यते ॥ ५५

रागवर्धनत्वे स एव यथा —

पशुपतिरपि तान्यहानि कृच्छ्रा-
दगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युः
विभुमपि तं यदमी स्पृशन्ति भावाः ॥ ५६

---

(1) गोपायन्ति ये प्रभुत्वं कुपितं दासा इव ये प्रसादयन्ति । त एव महिलानां प्रियाः शेषाः स्वामिन एव [वराकाः ॥

(2) कल्यं किल खरहृदयः प्रवत्स्यति प्रिय इति श्रूयते जने । तथा वर्धस्व भगवति निशे यथा तस्य कल्य- [मेव व न भवति ॥

(3) समदुःखसुखसन्धितानाम् कालेन रूढप्रणयानां । मिथुनानां म्रियते यत्तत्खलु जीवति इतरन्मृतं भवति॥

वैचित्र्ये मानानन्तरान्मानः. स यथा—

(1)जत्थ ण उज्जग्गिरओ जत्थ ण ईसा विसूरणं माणं ।
सब्भावचाडुअं जह्न णद्धि णेहो तहिं णद्धि ॥ ५७

रागवर्धनत्वे स एव यथा—

(2)अणवरअकेळिपसरंतसोक्खपब्भारईसिकुंठइअं ।
माणणिसाणअणि(चि)च्छिअं होइ पुणो अहिणवं पेम्मं ॥ ५८

प्रवासानन्तरात्प्रवासो बलीयान्. स वैचित्र्ये यथा—

पूर्वानुभूतं स्मरता च रात्रौ
कम्पोत्तरं भीरु तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि
मया कथंचिद्घनगर्जितानि ॥ ५९

स एव रागवर्धनत्वे यथा—

शैलः सोऽयं ककुभसुरभिर्माल्यवान्नाम यस्मि-
न्नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।
आर्येणास्मिन्विरमविरमातः परं न क्षमोऽस्मि
प्रत्यावृत्तः पुनरिव स मे जानकीविप्रयोगः ॥ ६०

करुणानन्तरात्करुणो बलीयान्. स वैचित्र्ये यथा—

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बद्धबिन्दु(र)मधरं परिबाधमानः ।
तत्तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं प्रमृज्य विगतानुशयो भवामि ॥ ६१

---

(1) यत्र नोज्जागरकं यत्र नेर्ष्याविसूरणं मानः । सद्भावचाटुकं यत्र नास्ति स्नेहस्तत्र नास्ति ॥

(2) अनवरतकेलिप्रसरत्सौख्यप्राग्भारेर्ष्याकुण्ठितम् । माननिशानयनिचितं भवति पुनरभिनवं प्रेम ॥

सएव रागवर्धनत्वे यथा—

वसने परिधूसरे वसाना
नियमक्षामतनुः कृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घां विरहव्यथां बिभर्ति ॥ ६२

एवं मानानन्तरप्रवासानन्तरकरुणानन्तरेभ्यः प्रथमानुरागः, प्रथमानुरागानन्तर प्रवासानन्तरकरुणानन्तरेभ्यो मानः, मानानन्तरकरुणानन्तर प्रथमानुरागानन्तरेभ्यः करुणो बलीयानिति, वैचित्र्येण रागवर्धनत्वे च यथादर्शनमुदाहरणीयम्. एवं नित्यान्नैमित्तिको बलीयान्.

स रागवर्धनत्वे यथा—

(1)मा वच्च पुप्फलाविर देवा उअअंजळीए तूसंति ।
गोळाणईए पुत्तअ सीळुम्मूळाइ कूळाइं ॥ ६३

सामान्याद्विशेषः. सोऽपि रागवर्धनत्वे यथा —

तं वीक्ष्य सर्वावयवानवद्यं
व्यावर्तितान्योपगमात्कुमारी ।
न हि प्रफुल्लं सहकारमेत्य
वृक्षान्तरं काङ्क्षति षट्पदाली ॥ ६४

प्रकाशात्प्रच्छन्नो बलीयान्. सोऽपि तत्रैव (यथा)—

(2)सव्वाआरमणहरं भणइ पई अडअणा पुळोअंति ।
जारत्तणेण विहिणा मह एसो किं ण णिंमविओ ॥ ६५

कृत्रिमादकृत्रिमो बलीयान्. सोऽपि तत्रैव यथा—

यदहमनया ग्रामे यण्या? झटित्यवलोकितो
मधुरमधुरस्निग्धस्निग्धोज्ज्वलोज्ज्वलया दृशा ।

---

(1) मात्रज पुष्पलवनशील देवा उदकाञ्जलिभिस्तुष्यन्ति । गोदानद्याः पुत्रक शीलोन्मूलानि कूलानि ॥
(2) सर्वाकारमनोहरं भणति पतिः असत्यः पश्यन्ति । जारत्वेन विधिना ममैष किं न निर्मापितः ॥

कपटचटुलभ्रं..................................

.................................... ॥ ६६

................ यथा —

एकस्मिन् शयने मया मयसुतामालिङ्ग्य निद्रालसा-
मुन्निद्रं शयितेन मच्चरणयोस्संवाहनव्यापृता ।
पादाग्रेण तिलोत्तमा स्तनतटे सस्नेहमापीडिता
हर्षावेगसमर्पितानि पुलकान्यद्यापि नो मुञ्चति ॥ ६७

तमःप्रकृतेः कनिष्ठस्य विप्रलम्भेऽनुभावसम्पद्यथा —

यस्मिंश्चिरप्रणयनिर्भरबद्धभाव-
मावेदितो रहसि मत्सुरतोपभोगः ।
तत्रैव दुश्चरितम........न्ती
व्रीतापि पापहृदया च सखीजनेऽस्मिन् ॥ ६८

अस्यैव सम्भोगे यथा—

दिष्ट्यार्धश्रुतविप्रलम्भवचनः क्रोधादहं नोद्गतः
दिष्ट्या नो परुषं रुषार्धकथितं किञ्चिन्मया व्याहृतम् ।
मां प्रत्याययितुं विमूढहृदयं दिष्ट्या गतान्तं कथा
मिथ्या दूषितयानया विरहितं दिष्ट्या न जातं जगत् ॥ ६९

तत्र धीरोत्तमाया विप्रलम्भेऽनुभावसम्पद्यथा—

(1)ण कओ वि र(राअ)मोक्खो माणक्खळणे वि ण पडिओच्चिअ बाहो ।
तीए णवरं पिअअमे गओगिअच्चितळोअणं? णीससिअं ॥ ७०

---

(1) न कृतोऽपि(राग)मोक्षो मानस्खलनेऽपि न पतित एव बाष्पः । तस्याः केवलं प्रियतमे... तलोचनं निश्वसितम् ॥

तस्या एव सम्भोगे यथा —

अथ विश्वात्मने गौरी सन्दिदेश मिथस्सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ ७१

धीरमध्याया विप्रलम्भेऽनुभावसम्पद्यथा—

(1) धीराण माणभंगे माणक्खलणेण गरुअधीरारंभे ।
उव्ळळइ तुळिज्जंते एक्कं पि वि से धिरं ण ळंघइ हिअअं ॥ ७२

तस्या एव सम्भोगे यथा —

(2) तो से रुव्भंतच्चिअ हिअअविअम्भंतहरिसवेउच्चाळिआ ।
पाअपडिअस्स हरिणो पडिआ पुट्ठीए वाहसळिळक्खेवा ॥ ७३

अधीरोत्तमाया विप्रलम्भेऽनुभावसम्पद्यथा —

(3) जाव अ ण देइ ओहिं परिरंभं जाव णेअ सिढिळेइ ।
मरणेण पुण्णअं मह तावग्गरुआविओ अप्पा ॥ ७४

तस्या एव सम्भोगे यथा —

(4) दिट्ठे जं पुळइज्जासि ओहरासि पिअंमि जं समासण्णे ।
तह संभासणसेउल्लि प्फंसणे किं वि ळज्जिहिसि ॥ ७५

अधीरमध्यमाया विप्रलम्भेऽनुभावसम्पद्यथा —

(5) भिउडीए पुळोइस्सं णिब्भच्छिस्सं परंमुही होस्सं ।
जं भणह तं करिस्सं सहिओ जइ तं ण पेछिस्सं ॥ ७६

---

(1) धीराणां मानभङ्गे मानस्खलनेन गुरुधैर्यारंभे । उल्ललति तोल्यमाने एकमपि...न लङ्घयति हृदयं ॥
(2) तत....हृदयविजृंभमाणहर्षवेगोच्चालिता । पादपतितस्य हरेः पतिताः पृष्ठे बाष्पसलिलोत्क्षेपाः ॥
(3) यावन्नददात्यवधिं परिरंभं यावन्नैव शिथिलयति । मरणेन पुण्यं मम तावद्गुरूकृत आत्मा ॥
(4) दृष्टे यत्पुलकिष्यसि अपहरसि प्रिये यत्समासन्ने । तथा संभाषणस्वेदार्द्रे स्पर्शे किमपि लज्जिष्यसे ॥
(5) भ्रुकुट्या पश्येयं निर्भर्त्सयेयं पराङ्मुखी भवेयं । यद्भणथ तत्करिष्ये सह्यः यदि तं न प्रेक्षिष्ये ॥

तस्या एव सम्भोगे यथा —

[1]पाअपडणाण मुद्धे रहसबळामोडिचुंबिअव्वाणं ।
दंसणमेत्तपसण्णे चुक्का बहुआण सोक्खाण ॥ ७७

अधीरकनिष्ठाया विप्रलम्भेऽनुभावसम्पद्यथा —

[2]अच्छीइँ ता थइस्सं दोहिं वि हत्थेहिं तंमि दिट्ठंमि ।
अंगं कळंबकुसुमं व पुळइअं कहं णु ढक्किस्सं ॥ ७८

तस्या एव सम्भोगे यथा—

[3]णीसासुक्कंपपुळोइएहि जाणंति णच्चिउं धण्णा ।
अम्हारिसीण दिट्ठे पिअम्मि अप्पा वि फम्मुसइ ॥ ७९

उत्तमत्वमुग्धत्वानुरूपाणि रामणीयकानि. तत्रोत्तमत्वं मुग्धामध्याप्रगल्भासु, मुग्धत्व-मुत्तमामध्याकनिष्ठासु रामणीयकहेतुरिति.

तत्र मुग्धाया उत्तमत्वं सम्भोगे यथा —

[4]बाळत्तणदुळ्ळळिआए अज्ज सुणु जं कअं णववहूए ।
भाआमि घरे एआइणित्ति णिद्धो पई रुद्धो ॥ ८०

विप्रलम्भे यथा —

[5]केळीगोत्तक्खळणे परस्स दुंदुळइ दिहिंदेहिइ ? ।
बहुवासअवासहरे बहूण वाहोव्लिळआ दिट्ठी ॥ ८१

---

(1) पादपतनानां मुग्धे रभसबलात्कारचुंबितव्यानां । दर्शनमात्रप्रसन्ने भ्रष्टा बहूनां सौख्यानां ॥

(2) अक्षिणी तावत् स्थगयेयं द्वाभ्यामपि हस्ताभ्यां तस्मिन् दृष्टे । अङ्गं कदंबकुसुममिव पुलकितं कथं नु शकेयं ॥

(3) निश्वासोत्कंपप्रलोकितैर्जानन्ति नर्तितुं धन्याः । अस्मादृशीनां दृष्टे प्रिये आत्मापि विस्मर्यते ॥

(4) बालत्वदुर्ललितया अद्य श्रृणु यत्कृतं नववध्वा । बिभेमि गृहे एकाकिनीति स्निग्धः पतिः रुद्धः ॥

(5) केलीगोत्रस्खलने वरस्य..... ........ । बहुवासकवासगृहे वध्वा बाष्पार्द्रिता दृष्टिः ॥

मध्याया उत्तमत्वं सम्भोगे यथा—

(1)सुरआवसाणविळिओणआओ सेओळ्ळवअणकमळाओ ।
अद्धच्छिपेच्छिरीओ पिआओ धण्णा पुळोअंति ॥ ८२

विप्रलम्भे यथा—

(2)जाणइ जाणावेउं अणुणअविद्दविअमाणपरिसेसं ।
अइरिक्कम्मि वि विणआवळंबणं सच्चिअं कुणंती ॥ ८३

प्रगल्भाया उत्तमत्वं सम्भोगे यथा—

कथमपि कृतप्रत्यापत्तौ प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम् ।
असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमं
विवलितदृशा शून्ये गेहे समुच्छ्वसितं पुनः ॥ ८४

विप्रलम्भे यथा—

भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥ ८५

अथोत्तमामध्याकनिष्ठासु मुग्धत्वम्, तत्रोत्तमाया मुग्धत्वं सम्भोगे यथा—

(3)किं किं ते पडिभाअइ सहीहि इअ पुच्छिआए मुद्धाए ।
पढमुळ्ळअदोहणिए णवरं दइअं गआ दिट्ठी ॥ ८६

---

(1) सुरतावसान......स्वेदार्द्रवदनकमलाः । अर्धाक्षिप्रेक्षिण्यः प्रियाः धन्याः पश्यन्ति ॥

(2) जानाति ज्ञापयितुं अनुनयविद्रावितमानपरिशेषं । विजनेऽपि विनयावलंबनं सह्यं कुर्वती ॥

(3) किं किं ते प्रतिभासते सखीभिरिति पृष्टाया मुग्धायाः । प्रथमार्द्रदोहदिन्याः केवलं दयितं गता दृष्टिः ॥

विप्रलम्भे यथा—

(1)कइआ गओ पिओ अज्ज पुत्ति अ(क)ज्जेण कइ दिणा होंति ।
एक्को एद्दहमेत्तो? भणिउं मोहं गआ बाळा ॥ ८७

मध्यमाया मुग्धत्वं सम्भोगे यथा—

(2)मुद्धत्तणेण बहुआ णंतेवक्खारआहि? सहिसद्धे ।
अणुमग्गपअंता? पिअअमेण हसिऊण पडिरुद्धा ॥ ८८

विप्रलम्भे यथा—

(3)सहि साहसु सब्भावेण पुच्छिमो किं असेसमहिळाण ।
वड्ढंति करठिअ च्चिअ वळआ दइए पउत्थंमि ॥ ८९

कनिष्ठाया मुग्धत्वं सम्भोगे यथा—

(4)सहिआहि भण्णमाणा थणए ळग्गं कुसुंभपुप्फंति ।
मुद्धवहुआ हसिज्जइ पप्फोडंती णहपआइं ॥ ९०

विप्रलम्भे यथा—

(5)अंदोळणळंघिअवइसिहाए दिट्ठे तुमम्मि मुद्धाए ।
आसङ्किज्जइ काउं करपेळ्ळणणिच्चळा दोळा ॥ ९१

बलाबलानुरूपाः सम्पर्कानुगमभक्तय इति । तत्र तुल्यबलयोर्युगपदुपनिपाते संपर्कः । स द्विधा, सजातीययोर्विजातीययोश्च ।

तत्र रूढप्रकृतकारणता सजातीयत्वं. यथा—

नैराश्यकातरधियो हरिणेक्षणायाः
श्रुत्वा निकामकरुणं च मनोहरं च ।

(1) कदा गतःप्रियः अद्य पुत्रि कार्येण कति दिनानि भवन्ति । एक एतावन्मात्रं भणित्वा मोहं गता बाला ॥
(2) मुग्धत्वेन वधू... ....सखीसार्धे । अनुमार्ग.... प्रियतमेन हसित्वा प्रतिरुद्धः ॥
(3) सखि साधय सद्भावेन पृच्छामः किं अशेषमहिलानाम् । वर्धन्ते करस्थिता एव वलया दयिते प्रवसिते ॥
(4) सखीभिर्भण्यमाना स्तनयोर्लग्नं कुसुंभपुष्पमिति । मुग्धवधूः हास्यते प्रस्फोटयन्ती नखपदानि ॥
(5) आन्दोळनलंघितवृतिशिखया दृष्टे त्वयि मुग्धायाः । .........कर्तुं करप्रेरणनिश्चलाडोला ॥

वात्सल्यमोहपरिदेवितमुद्वहामि
चिन्ताविषादविपदं च महोत्सवं च ॥ ९२

विरुद्धा प्रकृतकारणता विजातीयत्वं. यथा—

किमयमसिपत्रचन्दनरसच्छटाधारयुगपदवपातः ।
अनलस्फुलिङ्गकलिलः किमयमनभ्रः सुधावर्षः ॥ ९३

अतुल्यबलयोरनुगमः । सोऽपि द्विधा । स्थितानुगमः, आगन्त्वनुगमः च, तयोरागन्तोर्बलवतः स्थितानुगमः. यथा—

आश्वासितस्य मम नाम सुतोपलब्ध्या
सद्यस्त्वया सह कृशोदरि विप्रयोगः ।
व्यावर्तितानलरुजः प्रथमाभ्रवृष्ट्या
वृक्षस्य वैद्युत इवाग्निरुपस्थितोऽयम् ॥ ९४

स्थिते बलवति आगन्त्वनुगमः. यथा—

प्रणयसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ९५

एते (न) बहूनामप्युपगमे निपाते संपर्कानुगमसंविधिर्व्याख्यातः ।

तत्र सजातीयसम्पर्को यथा—

राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मया-
त्क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तते ॥ ९६

विजातीयसम्पर्को यथा—

न्यक्कारो हृदि वज्रकील इव मे तीव्रः परिस्पन्दते
घोरान्ते तमसीव मज्जति मनः संमीलितं लज्जया ।
शोकस्तार्क्ष्यविपत्तिजो दहति मां नास्त्येव यस्मिन्क्रिया
मर्माण्येव पुनश्छिनत्ति करुणा सीतां वराकीं प्रति ॥ ९७

बह्वनुगमस्थिते बलवती यथा—

काकुत्स्थं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणामुपशान्तये श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥ ९८

आगन्तौ बलवती यथा—

प्राप्तो विक्रमबाहुरात्मसमतां प्रातेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मै करोमि स्पृहाम् ॥ ९९

संनिधानकानुरूपास्तत्संविधय इति । यत्र संविधानके यावतां प्रथमानुरागादीनामस्तित्वं तावन्तस्तत्र संनिधीयन्ते.

क्वचिदेक एव यथा प्रवासो मेघदूते. क्वचिद्द्वयं यथा—प्रथमानुरागप्रथमानुरागानन्तरावुषाहरणे. क्वचित्त्रयं यथा प्रथमानुरागप्रवासकरुणाः कादम्बरीप्रथमखण्डे. क्वचिच्चत्वारः यथा—मानमानानन्तरप्रवासप्रवासानन्तरा हरिविजये. क्वचित्पञ्च यथा—प्रथमानुरागप्रथमानुरागानन्तरकरुणकरुणानन्तरप्रवासा नागानन्दे. क्वचित् षड्यथा—प्रथमानुरागप्रथमानुरागानन्तरकरुणकरुणानन्तरप्रवासप्रवासानन्तरा मालतीमाधवे. क्वचित्सप्त यथा—प्रथमानुरागप्रथमानुरागानन्तरमानमानानन्तरप्रवासप्रवासानन्तरकरुणाः कुमारसम्भवे. क्वचिदष्टौ यथा—प्रथमानुरागप्रथमानुरागानन्तरमानमानानन्तरप्रवासप्रवासानन्तरकरुणकरुणानन्तराः तापसवत्सराजे. एवं संविधानकानुरूपाः सर्वत्र विप्रलम्भसम्भोगयोः प्रकारसंविधयो विधातव्याः । ते चैकशो विप्रलम्भानामेव चत्वारः । सम्भोगवर्गस्तु निर्विशेषेणा-

नन्तरव्यपदेशं न लभते । द्वाभ्यां द्वाभ्यां दश. तत्र विप्रलम्भैः सानन्तरैश्चत्वारः प्रथमानुरागस्य; मानप्रवासकरुणैः मानस्य; प्रवासकरुणाभ्यां प्रवासस्य; करुणेन सम्प्रयोगे षडिति त्रिभिस्त्रिभिः षोडश. तत्र सानन्तरद्विकानां चतुर्णामितरविप्रलम्भैस्त्रिभिस्त्रिभिर्व्यस्तैर्योगे द्वादश, समस्तैरेव चत्वार इति चतुर्भिश्चतुर्भिरेकोनविंशतिः । तत्र सानन्तरद्विकानां चतुर्णामितरविप्रलम्भेभ्य एकैकहान्या द्वाभ्यां योगे प्राग्वदेव द्वादश. सानन्तरैश्च सानन्तराणां त्रिभिर्द्वाभ्यामेकेनेति योगे प्राग्वदेव षट्, चतुर्भिश्च विप्रलम्भैरेक इति, पञ्चभिः पञ्चभिः षोडश । तत्र सानन्तरद्विकानां त्रिभिस्त्रिभिरितरविप्रलम्भैर्योगे चतुर्णां चत्वारः सा(सोऽ)? नन्तरद्विकद्वयीनां च षण्णामितरविप्रलम्भयोः पृथक्पृथगेकैकेन योगे द्वादशेति षड्भिः षड्भिर्दश । तत्रैकैः सानन्तरद्विकहान्या सानन्तरैश्चत्वारः सानन्तरद्विकद्वयीनां च षण्णामितरविप्रलम्भा(नां)योगे षडिति । सप्तभिः सप्तभिश्चत्वारः । तत्रैकैकमनन्तरं सम्भोगमेव जह्यात् । विप्रलम्भत्यागे सम्भोगस्य तदनन्तरव्यपदेशाभावत् अष्टक ...एत्येकत्वे ? भेदा अशीतिः ।

तेषामित्यादिसम्भेदभेदः प्रत्येकमिष्यते ।
द्विशती तत्प्रभेदानां पञ्चपञ्चाशदुत्तरम् ॥
स्थितानामग्रिमैर्योगेऽनन्तराणामनन्तरैः ।
नित्यादिषु यथायोगं सम्भवेयुः ........ ॥

तथाहि, नित्यादयः पृथगप्येतेऽनन्तरैर्योगे सप्त षट् पञ्च चत्वारः त्रयो द्वावेक इति द्विका अष्टविंशतिः । एवं द्विकानामनन्तरैर्योगे चतुष्काः सप्ततिः चतुष्काणां पञ्चकाः षट्पञ्चाशत् । पञ्चकानां षट्का अष्टविंशतिः । षट्काणां सप्तका अष्टौ । सप्तकानामष्टक एक एव । चतुरादिभ्योऽन्येषामसम्भवात् न प्रस्तारवृद्धिः.

तत्राष्टकयोगो यथा—

मया नाम जितं यस्य त्वयायं समुदीर्यते ।
जयशब्दः सहस्राक्षादागतः पुरुषान्तरम् ॥ १००

सप्तकेषु नित्यनैमित्तिकसामान्यविशेषप्रकाशप्रच्छन्नाकृत्रिमाणां योगो यथा—

(1)पउरजुआणो गामो महुमासो जोव्वणं पई थेरो ।
जुण्णसुरा साहीणा असई मा होउ किं मरउ ॥ १०१

(1) प्रचुरयुवा ग्रामो मधुमासो यौवनं पतिस्स्थविरः । जीर्णसुरा स्वाधीना असती मा भवतु किं म्रियताम्॥

षट्केषु नित्यनैमित्तिकप्रकाशप्रच्छन्नविशेषाकृत्रिमाणां योगो यथा—

इयमवयवैः पाण्डुक्षामैरलङ्कृतमण्डना
कलितकुसुमा वल्लीवान्तर्लता परिशोषिणी ।
वहति च वरारोहा रम्यां विवाहमहोत्सव-
श्रियमुदयिनीमुद्भूतां च व्यनक्ति मनोरुजम् ॥ १०२

पञ्चकेषु नित्यनैमित्तिकविशेषप्रच्छन्नाकृत्रिमाणां योगो यथा—

इदमसुलभवस्तुप्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः क्षिणोति ।
किमुतमलयवातोन्मूलितापाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥ १०३

चतुष्केषु नित्यविशेषप्रच्छन्नाकृत्रिमाणां योगो यथा—

भूयोभूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्टादृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं य-
द्गाढोत्कण्ठा लुलितलुलितैरंगकैस्ताम्यतीति ॥ १०४

त्रिकेषु नित्यनैमित्तिकाकृत्रिमाणां योगो यथा—

प्रकृतिललितमेतत्सौकुमार्यैकसारं
वपुरयमपि सत्यं दारुणः पञ्चबाणः ।
चलितमलयवातोद्भूतचूतप्रसूनः
कथमयमपि कालश्चारुचन्द्रावतंसः ॥ १०५

द्विकेषु सामान्यविशेषयोर्योगो यथा—

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथ वा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १०६

केवलेषु नित्ययोगो यथा---

अभूद्वरः कण्टकितप्रकोष्ठः
स्विन्नांगुलिस्संववृते कुमारी ।
तुल्यं तयोस्तत्क्षणमात्मवृत्ति-
र्व्यक्तं विभक्तेव मनोभवेन ॥ १०७

एवमन्येऽपि यावत्प्रभेदमुदाहर्तव्याः । तत्रैकशोऽष्टौ ; द्विशोऽष्टाविंशतिः ; त्रिशः षट्पञ्चाशत् ; चतुर्भिश्चतुर्भिः सप्ततिः ; पञ्चभिः पञ्चभिः षट् (षष्टिः); षड्भिः षड्भिरष्टाविंशतिः ; सप्तभिः सप्तभिरप्यष्टौ ; अष्टभिश्चैक इत्येकत्वे पञ्चपञ्चाशद्द्वे शते । अशीतिघातात् सहस्रैकोनविंशतिः त्रिशती षष्टिश्च भवति. सन्निकर्षविप्रकर्षप्रकर्षापकर्षवत्यो व्यतिकरप्रकृतय इति. तत्र प्रत्यासन्नता सन्निकर्षः, विदूरता विप्रकर्षः, सन्निवेशचारुता प्रकर्षः, प्रकर्षविपर्ययो ह्यपकर्ष इति. तद्वत्यो नित्यादीनां प्रथमानुरागादीनां च व्यतिकरप्रकल्पना इति. तत्र नित्यादिषु सन्निकर्षवत्यः सजातीयानां, विप्रकर्षवत्यो विजातीयानां, प्रकर्षवत्यः अकृत्रिमादीनां, प्रथमानुरागादिषु सन्निकर्षवत्यो विप्रलम्भानां, विप्रकर्षवत्यः सम्भोगानां, प्रकर्षवत्यः सम्भोगान्तानां अपकर्षवत्यो विप्रलम्भान्तानामिति.

स्वभावविपरामर्शैः सन्निकर्षादयो द्विधा ।
अव्यवस्थाव्यवस्थाभिर्द्वेधा व्यतिकरक्र(क्र)मः ॥
प्रायः पूर्वानुरागादौ व्यवस्थानस्वभावयोः ।
नित्यादावव्यवस्थानविपरामर्शयोः श्रुतिः ॥

दिङ्मात्रमेतदुदितं प्रथमानुराग-
मानप्रवासकरुणैस्तदनन्तराणाम् ।
भूयश्च रूपमखिलं खलु विप्रलम्भ-
सम्भोगयोरनतिविस्तरतो वदामः ॥*

* अत्र प्रकाशान्तर इव " इति श्रीमहाराजाधिराज " इत्यादि उपसंहारवाक्यं मातृकायां न दृश्यते.

# ॥ अथ चतुर्विंशः प्रकाशः ॥

## विप्रलम्भः ।

---

तत्र सम्भोगो विप्रलम्भमन्तरेण न प्रकर्षमारोहतीति विप्रलम्भ एव प्रथममुपादीयते।

स चैवमुपजायते—नायकयोः प्रागसङ्गतयोः सङ्गतवियुक्तयोर्वा मिथो दर्शनश्रवणाभ्यां अवस्थिताभिमानजन्मा परस्परानुरागोऽन्यतरानुरागो वा अभिलषणीयालिङ्गनादीनामनवाप्तौ सत्यां समुपजायमानैस्तैस्तैरुत्कण्ठादिभिर्व्यभिचारिभावैर्मनोवाग्बुद्धिशरीरजन्मभिश्चानुभावैरनुविद्धः प्राप्तप्राप्यप्रकर्षावस्थो विप्रलम्भशृङ्गाराख्यां लभते । स परस्परानुरागे उत्तमः । नायिकानुरागे मध्यमः । नायकानुरागे कनिष्ठः । तस्य भेदाः—प्रथमानुराग, मान, प्रवास, करुण, विप्रलम्भाः । तेऽपि नायकयोः प्रागसङ्गतयोः सङ्गतवियुक्तयोर्वा भवति । तत्र सङ्गतवियुक्तयोः प्रागसङ्गतयोश्च मानप्रवासकरुणाः । प्रथमानुरागस्तु प्रागसङ्गतयोरेव ।

तदुक्तम्—स्त्रीपुंसयोरपूर्वादिदर्शनश्रवणजन्मा रूपगुणवयस्सम्पदुपकारापेक्षस्तदनपेक्षो वा मनःपक्षपातविशेषः प्रथीयान् प्रथमानुरागः । सोऽभिलाषादिभेदाच्चतुष्षष्टिप्रकारः, नित्यादिभेदादष्टप्रकारः, उच्चादिभेदाद्द्विनवत्युत्तरशतप्रकारः, परस्परघातात्साष्टत्रिंशत्सपादा (....)युतप्रकारः। तेषामेव हीनसमज्यायस्तया मिथो व्यतिषङ्गादनन्तप्रकारः सम्भवतीत्यभिहितं पुरस्तात् ।

एवं च सति—प्रथमानुरागे तदनन्तरादिसम्भोगे वा दृष्टश्रुतानुमिता (क्षिनुमिना?) पराधजन्मा मिथो मिथुनमानसेषु रोषो मानः ।

सति पूर्वानुरागे सम्भोगेऽपि वा दैवदुर्विपाकादिजन्मा स्त्रीपुंसयोर्विदूरदेशवासः प्रवासः।

प्ररूढस्नेहयोश्च दैवदुर्विचारा(पाका)दिभिरेकैकनिपातेऽन्यस्य दुःखातिरेको हृदयदारु(र)णः करुण इति ।

तत्प्रभेदान्पुनरग्रतो यथावसरमुपवर्णयिष्यामः । संज्ञास्तु नैताः पारिभाषिक्य एव । प्रकृतिप्रत्ययोपसर्गविभागकल्पनायामन्वर्थस्यापि सम्भवात् ।

तथाहि— डु, लभष् प्राप्तौ इत्यस्मात् विप्रशब्दपूर्वत्वे सति विशिष्टार्थवाचिनः सर्वकालेषु "भावे कर्तर्यकर्तरि च कारके संज्ञायां" वस्ति? विप्रलम्भ इति रूपं भवति । तत्रायं लभिः प्राप्तावपि पठ्यमानः प्रोपसर्गयोगाद्वञ्चने वर्तते । प्रस्य प्रकृतिविपरीतार्थवाचकत्वात् ।

तथा–प्रतिष्ठते प्रवसति प्रसरतीति । प्राप्तिविपरीतश्चार्थो वञ्चनमेव । तथा चानेनैव वञ्चतेरर्थं निर्दिशति "गृधिवञ्च्योः प्रलम्भन" इति । वञ्चनं तु चतुर्धा—प्रतिश्रुत्यादानं, विसंवादनं, कालहरणं, प्रत्यादानमिति । तत् विविधं, विरुद्धं, व्याविद्धं, विप्रतिपिद्ध, मिति विशेषवाचिना व्युपसर्गेणोच्यते ।

तत्र प्रतिश्रुत्यादानमित्ययं प्रकृत्यर्थः, विविधमित्ययं चोपसर्गार्थश्च प्रथमानुरागे घटते । तत्र हि इङ्गिताकारादिभिः स्वानुरागप्रकाशनं प्रतिश्रवः । तस्य च पारतन्त्र्य लज्जाभयान्यतरानिच्छादिभिर्विविधमनेकप्रकारमनिर्वहणमेवावदातं भवति ।

तत्र प्रकृत्यर्थो यथा—

समानप्रेमाणं जनमसुलभं प्रार्थितवतो
विधौ वामारम्भे मम समुचितैषा परिणतिः ।
तथाप्यस्मिन्दानश्रवणसमयेऽस्याः प्रविगल-
त्प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥ १

उपसर्गार्थो यथा—

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च संमोहयति च ॥ २

ताप? विसंवादनमित्ययं प्रकृत्यर्थो विरुद्धमित्ययं चोपसर्गार्थो माने सङ्गच्छते । तत्र हि मनोऽभिलषितालिङ्गनादीनां यथोक्तानामनवाप्तिर्विसंवादः, स च व्यलीकादिजन्मभिरीर्ष्यायितादिभिरुपजायमानो विरुद्ध एव भवति ।

तत्र प्रकृत्यर्थो यथा—

सोद्वेगस्य स्खलितवचसो यत्नसंस्तंभिताश्रोः
सावेगस्य श्रमजलभृतो दुर्निमित्तस्मितस्य ।
भूयोभूयः कृतकघटितभ्रूलताभङ्गहेतो-
र्मानस्यास्या रहसि कथितापह्नुतस्यास्ति नार्घः ॥ ३

उपसर्गार्थो यथा—

लीलावती चरणचुम्बितमौलिमग्रे
　कान्तं विधूय विहितागसमुच्चचाल ।
अत्रान्तरे मुखरनूपुरयुग्ममस्याः
　सौभाग्यगन्धगजडिण्डिमतां जगाम ॥ ४

कालहरणमित्ययं प्रकृत्यर्थो व्याविद्धमित्ययं चोपसर्गार्थः प्रवासेऽनुषज्यते । तत्र हि देशविप्रकर्षात् तदैवालिङ्गनादीनामनवाप्तिः कालहरणं, तच्च कालविप्रकर्षोत्कण्ठादिभिरत्यायतं व्याविद्धमेव भवति ।

तत्र प्रकृत्यर्थो यथा —

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
　शेषान्मासान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगणितं तंतमात्माभिलाषं
　निर्वेक्ष्यावः परिणतशरच्चान्द्रिकासु क्षपासु ॥ ५

उपसर्गार्थो यथा—

त्वामालिख्य प्रणयकुपितां धातुरागैश्शिलाया-
　मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
आस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालिप्यते मे
　क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ ६

प्रत्यादानमित्ययं प्रकृत्यर्थो विप्रतिषिद्धमित्ययं चोपसर्गार्थः करुणे सम्बध्यते । तत्र दैवमेवेष्टसङ्गमादि...न्दत्वे चाच्छिनत्ति ।

यथोच्यते—

सुहृदिव प्रकटय्य सुखप्रदां
　प्रथममेकरसामनुकूलताम् ।

पुनरकाण्डविवर्तनदारुणः
परिशिनष्टि विधिर्मनसो रुजम् ॥ ७

तच्च कस्य चिदपि कदा चिदपि मा भूयादिति विशेषेण प्रतिषिध्यमानं विप्रतिषिद्धमेव भवति ।

तत्र प्रकृत्यर्थो यथा —

गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम् ॥ ८

उपसर्गार्थो यथा —

धृतिरस्तमिता रतिश्च्युता
गलितं गेयमृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं
परिशून्यं शयनीयमद्य मे ॥ ९

ननु च प्रतिश्रुत्यदाना(दयश्च)त्वारोऽपि प्रकृत्यर्थाः, विविधमित्यादयश्चत्वारोऽपि चोपसर्गार्थाः प्रथमानुरागादिषु चतुर्ष्वपि व्यवस्थासम्प्लवाभ्यामुपलभ्यन्ते । तत्कथम्? उच्यते – प्रतिश्रुत्यादानमित्यादयो यथायथमुपसर्गा अविशिष्टाः प्रथमानुरागादिषु व्यवतिष्ठन्त इति ।

तथाहि प्रथमानुरागप्रतिश्रुत्यादानं विविधमपि दृश्यते यथा —

कथय किमिह बाले का त्वमित्युल्लपंस्तां
झटिति किल दुकूलस्याञ्चले धारयामि ।
अगमदथ निकेतं काप्यसौ शारयन्ती
नवकुवलयमालामांसलैर्दृष्टिपातैः ॥ १०

विविधमपि च यथा—

यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ ११

तत्रैव कालयापनमपि व्याविद्धमपि यथा—

अथ विश्वात्मने गौरी सन्दिदेश मिथस्सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ १२

व्याविद्धमपि च यथा—

मालत्याः प्रथमावलोकदिवसादारभ्य विस्तारिणो
भूयस्स्नेहविचेष्टितैर्मृगदृशा नीतस्य कोटिं पराम् ।
अद्यातः खलु सर्वथास्य मदनायासस्य मे सर्वतः
कल्याणं विदधातु वा भगवती नीतिर्विपर्येतु वा ॥ १३

तत्रैव प्रत्यादानमपि प्रतिषिद्धमपि यथा—

यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्सन्निधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥ १४

विप्रतिषिद्धमपि च यथा—

गत्वा तमहद्राक्षं तत्क्षणोत्क्रान्तजीवितम् ।
चिरात्त्वमागतासीति रुषितैवमवस्थितम् ॥ १५

एवं मानेऽपि प्रतिश्रुत्यादाने........यथा—

कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निश्वासैरयममृतहृद्योऽधररसः ।

मुहुर्लग्नः कण्ठे तरलयति बाष्पः स्तनतटीं
प्रियो मन्युर्जातस्तव निरनुरोधेन तु वयम् ॥ १६

विविधं यथा—

कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनमप्यानातिमाति ।
न दृष्टेः शैथिल्यं मिलन इति सन्तापयति मां
निगूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥ १७

तत्रैव विसंवादनमविरुद्धं यथा—

त्वया क्षान्तंक्षान्तं कुरु मुखमितो मां प्रति कृतिः(तं)
निधेहीदं(मं) पृष्ठे मम करमय(यं) कान्त निहित(तः) ।
सखीनां निर्बन्धान्मम च धृतपाणेः प्रणमतः
प्रिये काकुप्रीतेस्तव परमगूढं मयि रुषः ॥ १८

विरुद्धं यथा—

अनालोच्य प्रेम्णः परिणतिमनापृच्छ्य सुहृद-
स्त्वया दर्पान्मानः किमिति सरले प्रेयसि कृतः ।
समाकृष्टा ह्येते विरहदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ १९

तत्रैव कालहरणमव्याविद्धं यथा—

दूरादुत्सुकमागते विल(क)सितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णं क्षणा-
च्चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ २०

व्याविद्धं यथा —

कृशप्राया रात्रिः कृशतनु शनैर्येन विनम-
त्प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव ।
प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥ २१

तत्रैव प्रत्यादानमपि प्रतिषिद्धं यथा—

कोपो यत्र भ्रुकुटिरचना विग्रहो यत्र मौनं
यत्रान्योन्यं स्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ २२

विप्रतिषिद्धं यथा—

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसः
क्रीडातामरसोदरे मृगदृशः श्वासास्समाप्तिं गताः ॥ २३

अथ प्रवासेऽपि प्रतिश्रुत्यादानं विविधं यथा—

प्रिये हाहा क्वासि प्रकिर मधुरां वाचमधुना
पराभूतैरित्थं विलपनविनोदोऽप्यसुलभः ।
अनिन्द्यः पौलस्त्यो व्रजतु परिवादो मयि जरां
यतो रूढे वैरे बहुगुणमनेन प्रतिकृतम् ॥ २४

विविधं यथा—

कृतकरुदितैर्बाष्पाम्भोभिः सदैन्यविलोकितै-
र्वनमसि गता यस्य प्रीत्या तथापि धृताम्बया ।

नवजलधरश्यामाः पश्यन्दिशो भवतीं विना
कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥ २५

तत्रैव विसंवादनमविरुद्धं यथा —

तन्वङ्ग्यास्त्वमिति प्रसादविशसेर्नो(दं ना)स्ती(सी)ति खेदालसं
चक्षुर्द्वारपथावतारिणि जने व्यापारयन्त्या मुहुः ।
हर्षार्तिप्रभवः(व) प्रतिक्षणभवस्वेदाम्बुदाहज्वरे
बाष्पाम्भःकणिकाः पयोधरतटे पुष्यन्ति शुष्यन्ति च ॥ २६

विरुद्धं यथा —

दूरे प्रियतमः सोऽयमागतो जलदागमः ।
दृष्टाश्च फुल्ला निचुला न मृतास्मीति किं न्विदम् ॥ २७

तत्रैव कालहरणमव्याविद्धं यथा —

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेऽथ वा
किमुत सकले यातेऽप्यह्नि प्रिय त्वमिहैष्यसि ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं वालालापैः सबाष्पजलञ्झलैः ॥ २८

व्याविद्धं यथा—

(1)चिरजीवित्तणकिंखिरि मा तम्म रसाअणेहि अथिरेहिं ।
विरहं पवज्ज जाअंति जेण जुअदीहरा दिअहा ॥ २९

तत्रैव प्रत्यादानमप्रतिषिद्धं यथा —

(2)उअहज्जंतितितुच्छाए जाइ पिअसंगमंमि सोक्खाइ ।
ताइ विरहेण पि........घु०गाळिआइ कीरंति ॥ ३०

(1) चिरजीवित्वकांक्षिणि मा ताम्य रसायनैरस्थिरैः । विरहं प्रतिपद्यस्व जायन्ते येन युगदीर्घतरा दिवसाः ॥

(2) अविशदा इयं गाथा.

प्रतिषिद्धं यथा —

मुग्धे प्रेषय यामि यान्ति पथिकाः कालोऽवधिः कथ्यता-
मुद्विग्ना किमकाण्ड एव भवती तूष्णीं किमेवं स्थिता ।
पूर्वोक्तोपरतां प्रियेण दयितामाश्लिष्य तत्तत्कृतं
दत्तो येन समस्तपान्थपथिकप्राणान्तिको डिण्डिमः ॥ ३१

तथा करुणे प्रतिश्रुत्यादानं विविधं यथा —

अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने ।
न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्तदर्शनम् ॥ ३२

विविधं यथा —

हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥ ३३

तत्रैव विसंवादनमविरुद्धं यथा —

उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया ।
तदिदं गतमीदृशीं दशां न विदीर्ये कठिनाः खलु स्त्रियः ॥ ३४

विरुद्धं यथा —

दलति हृदयं गाढोद्वेगाद्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनां ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३५

तत्रैव कालयापनमव्याविद्धं यथा —

तेनाष्टौ परिगमिताः समाः कथंचि-
द्बालत्वादवितथसूनृतेन सूनोः ।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥ ३६

व्याविद्धो यथा—

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः ।
प्रणष्टमिव नामापि न च रामो न जीवति ॥ ३७

तत्रैव प्रत्यादानमप्रतिषिद्धं यथा —

तीव्राभिषङ्गप्रभवेन वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ३८

प्रतिषिद्धं यथा—

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथावृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ ३९

अथ प्रथमानुरागे विसंवादनमपि त्रिविधं यथा—

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लबाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु ॥ ४०

कालहरणमप्यविरुद्धं यथा—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कति चिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ ४१

माने प्रतिश्रुत्यादानमपि व्याविद्धं यथा—

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।

आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ ४२

अप्रतिषिद्धमपि विसंवादनं यथा—

भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विष्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥ ४३

प्रवासे प्रत्यादानमपि विविधं यथा—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ ४४

विसंवादनमपि व्याविद्धं यथा—

आदृष्टिप्रसरात्प्रियस्य पदवीमालोक्य निर्विण्णया
विश्रान्तेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति ।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियास्मिन् क्षणे
मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम् ॥ ४५

करुणे कालहरणमप्यविरुद्धं यथा—

अथ मदनवधूरुपप्लवान्तं
व्यसनकृशा प्रतिपालयाञ्चकार ।
शशिन इव दिवातनस्य रेखा
किरणपरिक्षयधूसरा प्रदोषम् ॥ ४६

विसंवादनमपि विविधं यथा —

ततः कैरप्युक्ते परिणयविधौ काष्ठमुनिभिः
पुराणैरातङ्कग्लपितहृदयेन क्षितिभृता ।
विना वाचा नैतत्क्षममिति विधायाननमधः
पतद्बाष्पाम्भोभिर्लिखितमिव दत्तं प्रतिवचः ॥ ४७

एवमन्येऽपि प्रकृत्यर्थोपसर्गार्थानां व्यवस्थासम्भवाः संदृश्यन्ते ।

अत्रोच्यते संज्ञाशब्दानां यथाकथंचिद्व्युत्पत्तिदर्शने रूढिर्विषयमपहरति । तेन व्युत्पात्ति ............यमोपपद्यते. सतत्रै........व्यवह्रियते । न चासावन्यत्र नास्ति । न चान्ये तत्र न सन्ति । तद्यथा—पङ्केरुहं सरसिजमिति । न हि ततः पङ्क एव केवलं रोहत्यपि तु जले । न केवलं सरस्येव जायतेऽपि तु वाप्यामपि. न च तदेव पङ्के पयसि सरसि वा अपि तु कशेरुक-मकरमत्स्यमुस्ताद्यपीति । तद्वदिहापि द्रष्टव्यम् ।

किञ्च यद्यपि प्रतिश्रुत्यादानमित्यादयोऽर्था मानादिष्वपि संभवन्ति. तथापि यथा प्रथमानुरागे प्रतिश्रुत्यादानं वैविध्यं च संविधानकेषु निरूप्यते नैवमन्येषु । यद्यपि च विसंवादनादयोऽपि विरोधादिसहकृतास्तत्र विद्यन्ते. तथापि यथा प्रतिश्रुत्यादानं वैविध्यं च नैवमेते.........णेत्यभिप्रायेणोक्तम् । प्रतिश्रुत्यादानमित्ययं प्रकृत्यर्थः । विविधमित्ययं चोपसर्गार्थः प्रथमानुरागे घटत इति ।

एतेन मानादिष्वपि विप्रलम्भशब्दस्य यथोक्ता निरुक्तयो व्याख्याताः । कः प्रथमानुरागादिसंज्ञादीनामन्वर्थतायां प्रकृत्युपसर्गार्थप्रत्ययार्थविभागः ? उच्यते—“रञ्जरागे” इत्यस्मात् राजृदीप्तौ इत्येतस्माद्वा भावकरणयोर्घञि राग इति रूपं भवति । ततश्चानुगतोऽनुरूपो वा रागः अनुरागः इति करणसाधनप्रत्ययोत्पत्तिपक्षे अनुना समासः । अनु पश्चात्सह वा रागः अनुराग इति । भावसाधनप्रत्ययोत्पत्तिपक्षेऽनुना समासः । रञ्जयतिश्चेहानुषक्तिवचनो वर्णान्तरापत्तिवचनश्च गृह्यते तथानुरक्तो भोजने कषायेण रक्तं वस्त्रमिति । कथं तर्हि रक्तो वर्णः पार्थिवं रज इति ? । उपचाराद्रक्त इव रक्तः । तत्र प्राधान्येन कुसुम्भलाक्षादिना च रक्तं रक्तमुच्यते । यथा “रक्तं वस्त्रमाविधवा स्त्री धारयेदि”ति तद्वत्स्वभावतोऽपि यो भवेत् सोऽपि रक्त इत्युच्यते । यथा कषायौ गर्दभस्य कर्णौ । हरिद्रे कुक्कुटस्य पादाविति । एवं रज इव रजः । यथा रजो नाम गुणविशेषः प्रत्यात्ममनुषज्यते एवं पृथ्वीपरागः यः सर्वत्रानुषङ्गी स एवमुच्यते । राजतिः पुनरिह शोभावचनः समृद्धिवचनश्च

यथा—

उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते ।
मलीमसमुखी वर्तिः प्रदीपशिखयेव सा ॥ ४८

यथा च—

येनेष्टं राजसूयेन सर्वभूमीश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राट् कथ्यते बुधैः ॥ ४९

अस्मात् भावकारणयोरन्यत्राघञुत्पत्तिरिष्यते, रञ्जेस्तु भावकरणयोरेव घञि न लोपः. ततश्चायमर्थः सङ्गच्छते. रज्यत्यनुषज्यते विषयेष्वनेनेति रागः रूपलावण्यादिर्विषयधर्मः प्रकृत्यादिराश्रयधर्मो वा. रजत्यनेन प्रतियोगिनमात्मानं वा रागः रूपलावण्यादिराश्रयधर्मो विषयधर्मो वा. रज्यते स्वेदरोमाञ्चवैवर्ण्यादिभिर्वर्णान्तरमापद्यते विषय आश्रयो वा येन स राग उच्यते. उभयोर्वक्त्रवीक्षितादिभिश्चेष्टाविशेषः प्रमोदविशेषो राजते शोभतेऽनेन समानशीलगुणवयोविद्याव्यसनेष्विति रागः. उत्तमप्रार्थनीयतादिभिरनुरूपप्रार्थनादिर्वोभयगतो विशेषः राजते दीप्यते समुद्यते? परं प्रकर्षमापद्यते रतिरनेनेति रागः उभयगत इङ्गिताकारादिविशेषः कालयापननेपथ्यविलेपनादिरुद्दीपनविशेषो वा. भावसाधनपक्षे तु रतिरेका एवं प्रकारा रागशब्देनाभिधीयते. तस्य च यदनुना सहार्थेन सह समासस्तदा स्त्रियाः पुरुषस्य च तुल्यकालमेव रत्युत्पत्तावुत्तमम्। यथा—

अभूद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिस्संववृते कुमारी ।
तस्मिन् द्वये तत्क्षणमात्मवृत्तिस्समं विभक्तेव मनोभवस्य ॥ ५०

यदा अनुरागशब्दस्य पश्चादर्थोऽनुना समासस्तदा पुंसः पश्चादुत्पत्तौ मध्यमः. यथा—

अद्यप्रभृत्यनवमाङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ५१

स्त्रियाः पश्चादुत्पत्तौ कनिष्ठः. यथा—

[1]मामि हिअअं व पीअं तेण जुआणेण मज्जमाणीए ।
ह्णाणहळिद्दाकडुअं अणुसोत्तजलं पिअंतेण ॥ ५२

करणसाधनप्रत्ययोत्पत्तिपक्षे तु यदानुरूपो रागः अनुराग इत्यनुरूपार्थेनानुना समासः तस्मादुद्गतस्य लावण्यादेः प्रसिद्धादेर्वा ? सिद्धमुत्तमत्वं. यथोच्यते—

[2]सच्चं जाणइ दठ्ठुं सरिसंमि जणंमि जुज्जए राओ ।
मरउ ण तुमं भणिस्सं मरणं वि सळाहणिज्जं से ॥ ५३

यदा पुनरनुगतार्थोऽनुना समासस्तदा स्त्रियः पुरुषेच्छानुवृत्तौ मध्यमः. यथा—

स्थाने तपो दुश्चरमेतदर्थ-
मपर्णया कोमलयापि तप्तम् ।
या दास्यमप्यस्य लभेत नारी
सा स्यात्कृतार्था किमुताङ्कशय्याम् ॥ ५४

पुरुषस्य स्त्रीच्छानुवृत्तौ कनिष्ठः यथा—

[3]सो तुह कएण सुंदरि तह छीणो सुमहिळो हळियउत्तो ।
जह से मच्छरणीए वि दोच्चं जाआए पडिवण्णं ॥ ५५

एतेन अन्यतरानिच्छायामनुरागाभासेऽप्यानुरूप्यं व्याख्यातम्. तत्र पुरुषस्यानिच्छायां उत्तमः यथा—

तदनघ तनुरस्तु सा सकामा
व्रजति पुरा हि परासुतां त्वदर्थे ।
पुनरपि सुलभं तपोऽनुरागी
युवतिजनः खलु नाप्यतेऽनुरूपः ॥ ५६

---

(1) मातुलानि हृदयमिव पीतं तेन यूना मज्जन्त्याः । स्नानहारिद्राकटुकं अनुस्रोतोजलं पिबता ॥

(2) सत्यं जानाति द्रष्टुं सदृशे जने युज्यते रागः । म्रियतां न त्वां भणिष्यामि मरणमपि श्लाघनीयमस्याः ॥

(3) स तव कृते सुन्दरि तथा क्षीणः सुमहिलो हालिकपुत्रः । यथास्या मत्सरिण्या अपि दौत्यं जायया प्रतिपन्नम्॥

स्त्रिया अनिच्छायां मध्यमः. यथा—

सञ्चारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥ ५७

स्त्रिया एवात्यनुरागस्तु द्वेषे कनिष्ठः यथा—

श्वासालिङ्गनधूसरेण सुमुखी बिम्बाधरेणामुना
पर्यन्तारुणतां दृशोर्विदधती बाष्पैरवच्छेदिभिः ।
क्षामक्षामकपोलमण्डलपतद्यालोलम्बालकै-
रङ्गैरुज्झितभूषणैः कथमियं धत्ते नवं मण्डनम् ॥ ५८

एवमवस्थितेत्य (थ्य) र्थेवत्यनुरागशब्दे प्रथमशब्देन समासः प्रथमश्चासावनुरागश्च प्रथमानुरागः प्रथमं वानुरागः प्रथमानुराग इति । भावसाधनपक्षे । यथोच्यते—

"तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदन्यत्रापरिक्लिष्टपूर्वस्तपस्वी यतोऽधुनाऽशक्यमनेन मरणमप्यनुभवितु'मिति.

करणसाधनप्रत्ययोत्पत्तिपक्षे तु प्रथमायामनुरागः प्रथम उत्कृष्टेऽद्वितीये वानुरागः प्रथमानुरागः यथोच्यते—

"एक एव सार्ववर्णिको नायकः प्रच्छन्नश्च द्वितीयो विशेषलाभा"दिति.

सोऽयमनुरागः प्रेमगतेः स्वभावकुटिलत्वात्कुटिलतामालम्बमानो मान इत्युच्यते. का पुनर्माने निरुक्तिः. उच्यते—"मान-पूजायां" "मन-ज्ञाने" "मनु-बोधने" "माङ्-माने" इत्येतेभ्यो भावकरणादिष्वेव घञ्ल्युटोर्मान इति रूपं भवति । तथाहि—मान्यते पूज्यतेऽनेनेति मानः यथोच्यते ।

(1)पाअपडणाण मुद्धे रहसबलामोडिचुंबिअव्वाणं ।
दंसणमेत्तपसिज्जिरि चुक्का बहुआण सोक्खाण ॥ ५९

(1) पादपतनानां मुग्धे रभसबलात्कारचुम्बितव्यानाम् । दर्शनमात्रप्रसादनशीले वञ्चिता बहूनां सौख्यानाम् ॥

मन्यते दुःखैकहेतुमपि सुखसाधनमेवैनमिति मानः. यथोच्यते—

मा पुनस्तमभिसीसरमागस्कारिणं मदविमोहितचेताः ।
योषिदित्यभिललाष न हालां दुस्त्यजः खलु सुखादभिमानः ॥ ६०

मनुते बुध्यतेऽस्मात्प्रेमास्तित्वमिति मानः. यथा—

(1) जइ ण उज्जग्गिरओ जइ ण ईसाविसूरणं माणं ।
सब्भावचाडुअं जइ णत्थि णेहो तहिं णत्थि ॥ ६१

मिमीते परिच्छिनत्ति प्रेम्णः प्रमाणमसाविति मानः. यथा—

कुविआ अ सच्चभामा समे वि वहुईण णवर माणक्खलणे ।
पाअडिअहिअअसारो पेमा संघसरिसा? पट्टइ मंतु ॥ ६२

कथं पुनर्मान इति ल्युडन्तस्य पुंसि प्रयोगः? शिष्टप्रयोगदर्शनात्.

यथाह महाभाष्यकारः—

"अस्ति क्रिया किंतु साधनेभ्यः पृथगाख्यातुमशक्यं, अनिर्लुठितगर्भवत्, सोऽसावनुमानगम्या कोऽसावनुमानः? यत्सर्वेषु साधनेषु सन्निहितेषु कदा चित्पचतीत्येतद्भवति कदाचिन्न भवतीति ।"

अथानुराग एव देशान्तर व्यवधाने प्रवासाख्यां लभते. का पुनः प्रवासे निरुक्तिः? "वस-निवासे" "वस-आच्छादने" इत्येतयोः प्रपूर्वयोर्भावकरणादिष्वेव घञि प्रवास इति रूपं भवति. तत्र वसेः प्रपूर्वस्य तद्विपरीतार्थवाचित्वे प्रवसनं प्रवासः, यथा—

कश्चित्कान्ताविरहगुरुणा (2) स्वाधिकारप्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ ६३

(1) यत्र नोज्जागरो यत्र नेर्ष्याविसूरणं मानः । सद्भावचाटुकं यत्र नास्ति स्नेहस्तत्र नास्ति ॥
(2) मातृकायां इदं पदं समस्तमेव दृश्यते.

प्रकर्षेण वासयत्यनुरञ्जयति तन्मयतां नयति कामिनोश्चित्तमिति वा प्रवासः. यथा—

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रवमविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
(1) सङ्कल्पैस्ते विशति विधिना वैरिणा रुद्धमार्गः ॥ ६४

यदि वा प्रपूर्वो वसिर्णिजन्तः प्रमापणे वर्तते. यथा "तूष्णीमेनं प्रवासयेदिति" ततश्च प्रवास्यन्ते हन्यन्ते वियोगिन इति प्रवासः. यथा—

ग्रामेऽस्मिन्पथिकाय पान्थ वसतिर्नैवाधुना दीयते
रात्रावत्र विवाहमण्डपतले पान्थः प्रसुप्तो युवा ।
तेनोत्थाय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं
येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥ ६५

एते त्रयोऽपि वसत्यर्थाः । अथ वस्तेरर्थः. आवसते अच्छादयन्त्यस्मिन्वियोगिन्यो विशेषवेषादिकमिति प्रवासः. यथा—

वसने परिधूसरे वसाना नियमक्षाममतनुः कृशैकवेणी ।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्यथां बिभर्ति ॥ ६६

अनुराग एवान्यतरविनाशे दुःखानुभवादिभिः करुणसंज्ञो भवति. का पुनःकरुणे निरुक्तिः? उच्यते—करोतेः किरतेर्वा "कृवृदारिभ्य उनन्" इत्यौणादिके कर्तर्युनन्प्रत्यये करुण इति रूपं भवति। तत्रायं करोतिरभूतप्रादुर्भावोच्चारणनिक्षेपाभ्यङ्गेषु वर्तते यथा—घटं करोति पटं करोति अभूतमुत्पादयतीति गम्यते। चोरं कारमाक्रोशति दस्युङ्कारमाक्रोशति चोरोऽसि दस्युरसीत्युच्चार्य क्रोशतीति गम्यते। घटे कुर्वतः घटे, कुरु कृतान्नमशेत् अश्मानमितः कुरु निक्षिपेति गम्यते। पादौ कुरु पृष्ठं कुरु घृतेन तैलेन वोन्मृदानेति? गम्यते। किरतिस्तु विक्षेपे पठ्यते. विशिष्टश्च क्षेपो विक्षेपः. विशेषास्त्वस्य वैविध्यं विरुद्धता व्याविद्धत्वं प्रतिषेध इति. तत्र यदा किरतेः करुण इति रूपं तदा विविधो व्याविद्धो विप्रतिषिद्धश्च दीर्घशोक एव करुणशब्देनोच्यते. स हि प्राणी सांसारिकेभ्यः सुखेभ्यो विक्षिपति. यथा—

(1) संकल्पैस्ते इत्येव मातृकायां दृश्यते.

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे ।
वत्स राम गतोऽसीति सन्तापादनुमीयसे ॥ ६७

प्राणाः प्रयान्ति परितस्तमसावृतोऽस्मि
मर्मच्छिदो मम रुजः प्रसरन्त्यपूर्वाः ।
अक्ष्णोर्मुखेन्दुमुपधेहि गिरं च देहि
हा पुत्र मय्यकरुणः सहसैव मा भूः ॥ ६८

यदा तु करोतेरभूतप्रादुर्भावनाद्यर्थवाचिनः करुण इति रूपं तदा स्त्रीपुंसविषय आयोजितकामसूत्रः पुनः समागमफलोऽनुराग एव करुणशब्देनोच्यते. तद्यथा – दुःखातिरेकादभूतान्करोति प्रादुर्भावयतीति करुणः. यथा—

मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ६९

करोत्युच्चारयति विलापादिभिस्तद्गुणमिति करुणः यथा—

अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥ ७०

करोति स्थापयत्यनेन मरणजीवितयोरेकत्रेति करुणः. यथा –

इत्थं रतेः किमपि विभ्रमदृश्यरूपं
मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेना-
माश्वासयत्सुचरितार्थपदैर्वचोभिः ॥ ७१

करोत्यभ्यञ्जयति बहिरन्तश्च व्याप्नोति विस्रम्भोत्पत्त्या स्त्रीपुंसयोरन्यतरस्यायं हृदयमिति करुणः. यथा –

विलुलितमपि पूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती पक्ष्मलोत्तानदीर्घा ।

स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलमधुरमुग्धा दुग्धकुल्येव दृष्टिः ॥ ७२

सोऽयं विप्रलम्भादिषूपसर्जनीकृतप्रत्ययार्थः प्रकृत्यर्थोप(पि)वर्णितः। अथोपसर्जनीकृतप्रकृत्यर्थः प्रत्ययार्थो वर्ण्यते. तत्र भावः कर्म करणं सम्प्रदानं अपादानं, अधिकरणं, कर्ता, हेतुकर्ता भावकर्ता कर्मकर्ता,[1] कर्तृकर्म, भावकर्मेति प्रत्ययार्थाः ।

तेषु भावो यथा—

अवचनं वचनं प्रियसन्निधावनवलोकनमेव विलोकनम् ।
अवयवावरणं हि यदंशुकव्यतिकरेण तदङ्गमर्पणम् ॥ ७३

कर्म यथा—

पश्यामि तामित इतश्च पुरश्च पश्चा-
दन्तर्बहिः परित एव च वर्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासङ्गि तिर्यगपवर्तितदृष्टिवक्त्राम् ॥ ७४

करणं यथा—

अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसा निर्भरेण ।
कबलित इव कृत्स्नं चक्षुषा स्फारितेन
प्रसभममृतमेघेनेव सान्द्रेण सिक्तः ॥ ७५

सम्प्रदानं यथा—

कृतवानसि विप्रियं न मे प्रतिकूलं च न ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ ७६

---

(1) ९४ तमे पुटे विप्रलंभप्रपंचे उपसर्जनीकृत प्रकृत्यर्थस्य अवान्तरभेदनामानि द्वादश निर्दिष्टानि तेषु 'कर्मकर्ता' इति दशमः, 'कर्तृकर्म' इत्येकादशः, ''भावकर्म'' इति द्वादशः. अत्र उदाहरणप्रकरणे एकादशस्य 'कर्मकर्तृ' इति नामाक्षराणि दृश्यन्ते.

अपादानं यथा—

किञ्चिन्मुद्रितपांसवः शिखिकुलैः सानन्दमालोकिता
भग्नावासरुददरिद्रगृहिणीश्वासानिलैर्जर्जराः ।
एते ते निपतन्ति नूतनघनाः प्रावृड्भरारम्भिणो
विच्छायीकृतविप्रयुक्तवनितावक्त्रेन्दवो बिन्दवः ॥ ७७

अधिकरणं यथा—

यस्यां ते दिवसास्त्वया सह तथा नीताः पुनः स्वे गृहे
यत्सम्बद्धकथाभिरेव सुचिरं दीर्घाभिरास्थीयत ।
एकः सम्प्रति नाशितप्रियतमस्तामेव पापः कथं
रामः पञ्चवटीं विलोकयतु वा गच्छत्वसंभाव्य वा ॥ ७८

कर्ता यथा—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ ७९

हेतुकर्ता यथा—

चिराद्वेगारम्भी विकृत इव तीव्रो विषरसः
कुतश्चित्संवेगात् प्रचल इव शल्यस्य शकलः ।
व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुनः
प(पु)रावृत्तः शोको विकलयति मां नूतन इव ॥ ८०

भावकर्ता यथा—

कुचद्वन्द्वे तस्मिन्द्विपकलश(कलभ)कुम्भस्थलतुलां
दधानेऽस्मिन्कस्या ? युवतिषु न चित्तस्य रुजति ।
तथोर्वोर्युग्मे वा द्रुतरुचिरचामीकररुचो
विकर्षत्यूष्माणं कमिव न युवानं ज्वरयति ॥ ८१

कर्मकर्ता यथा—

तान्येतानि शिखण्डिताण्डवगुरूनम्भोधरानम्बरे
तन्वानानि दिनानि नूनममृतस्यन्दीनि वन्दामहे।
उद्गाढा नवनीलनीरजदृशामत्यन्तमायामिनो
भिद्यन्ते स्वयमेव येषु विषमा मानग्रहग्रन्थयः॥ ८२

कर्मकर्तृ यथा—

गर्जन्तेऽभिनवं वृणो? वकिरते चूतेषु य(प)त्नोत्करः
पुष्पैर्भूषयते पमानविटपी? वाप्यां मनो रज्यति।
ब्रूते वाक्स्वयमेव कोकिलमुखे मानग्रहो मोक्ष्यते
सम्प्रत्येष यथा तथा प्रियसखि प्रौढिर्मघोर्मूर्च्छति॥ ८३

भावकर्म यथा—

अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकृतोदयम्।
विनयवारितवृत्तिरितस्तया न विवृतो मदनो न च संहृतः॥ ८४

अथ प्रत्ययोत्पत्तिकालाः। केपुनस्ते? भूतो भविष्यन् वर्तमानोऽव्यक्त इति। भूतः परोक्षभूतो भूतानद्यतन इति। भविष्यं त्रिधा भविष्यद्भूतः भूतभविष्यन् भविष्यदद्यतन इति। वर्तमानस्त्रिधा वर्तमानो भूतसामीप्यो भविष्यत्सामीप्य इति। अव्यक्तस्त्रिधा अव्यक्तः अतिपन्नः सङ्कीर्ण इति। तेषु लुङादिवाच्यो भूतो यथा—

एतत्पुनर्वनमहो कथमद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः।
आरण्यकाश्च गृहिणश्च रताश्च धर्मे
सांसारिकेषु च रसेषु वयं रसज्ञाः॥ ८५

लिडादिवाच्यः परोक्षो यथा—

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु॥ ८६

लङादिवाच्यो भूतानद्यतनो यथा—

करकमलविशी(ती)र्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान्मैथिली यानपुष्यत् ।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्नवोद्भेदयोग्यः ॥ ८७

लङादिवाच्यो भविष्यन् यथा—

प्रत्यागमिष्यसि भविष्यति सङ्गमोऽपि
सम्पत्स्यते च हृदयाभिमतोऽभिलाषः ।
एषा गता न पुनरेष्यति जीवितेश
विद्युद्विलासतरला नवयौवनश्रीः ॥ ८८

"आशंसायां भूतवच्चे"ति भूतभविष्यन् यथा—

अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः ।
अयमायातः कालो हन्त हताः पथिकगेहिन्यः ॥ ८९

लुङादिवाच्यो भविष्यदद्यतनो यथा—

भूमिः कण्टकिनी पुरो विटपिनः प्रायो बहूपद्रवा
भूयः सैष दिवाकरो मृगयते सन्ध्यावधूसङ्गमम् ।
का वा ते पथिक त्वराद्य गमने ग्राम्ये विधेये जने
प्रातः श्रान्तविनोदितेन मनसा स्थातासि गन्तासि वा ॥ ९०

लङादिवाच्यो वर्तमानो यथा—

प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः ।
रणरणकविवृद्धिं बिभ्रदावर्तमानं
ज्वलति हृदयमन्तस्तन्मयत्वं च धत्ते ॥ ९१

स एव भूतासन्नो भूतसामीप्यो यथा—

विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे पुंसां जगदिदमरण्यं हि भवति।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमेवं त्वं पृच्छस्यनधिगतरामायण इव ॥ ९२

भविष्यदासन्नो भविष्यत्सामीप्यो यथा—

इयमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयिणी भवामि ते ।
चतुरैः सुरसुन्दरीजनैः प्रिय यावन्न विलोभ्यसे दिवि ॥ ९३

लिङादिवाच्योऽव्यक्तो यथा—

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि विज्ञास्यसि मृषा
किमेतन्मे वक्तुं क्षममिति न वेद्मि प्रियतमे ॥ ९४

लृङादिवाच्योऽतिपन्नः । यथा—

रामाय पुण्यमहसे सदृशाय सीता
दत्तैव दाशरथिचन्द्रमसेऽभविष्यत् ।
आरोपणेन पणमप्रतिकार्यमार्य-
स्त्रैयम्बकस्य धनुषो यदि नाकरिष्यत् ॥ ९५

धातुसम्बन्धोत्पन्नप्रत्ययवाच्यः सङ्कीर्णः. यथा—

अतन्द्रिता सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां
न पुत्रवात्सल्यमपाकरिष्यति ॥ ९६

त एते द्रव्यात्मनः क्रियात्मनो वा क्रियापरिच्छेदिनः कालाः. अथापरे द्रव्यात्मनः क्रियासाधनरूपा विद्यन्ते. के पुनस्ते? नित्यो नैमित्तिकः स्वाभाविको वैपरामर्शिक इति. तेषु नित्यः शाश्वतिको वैकल्पिको नैयोगिकश्च. नैमित्तिक औद्योतिक औपभोगिकः प्रायोगिकश्च. स्वाभाविक आगन्तुको नैसर्गिकः सांसर्गिकश्च. वैपरामर्शः सङ्कीर्णः प्रकीर्णो विप्रकीर्णश्च, इति प्रत्येकं त्रैविध्याच्चत्वारोऽपि ते द्वादश भवन्ति. ते (षु क्ष?) णनिमेषनाडिकामुहूर्तप्रहराहोरात्ररूपः शाश्वतिकः. स यथा—

क्षणे निमेषे नाड्यां वा मुहूर्ते प्रहरेऽपि वा ।
गते त्वमेष्यसीत्युक्ते रुरोध पथिकः प्रियाम् ॥ ९७

दिनरात्रिपक्षमासर्त्वयनरूपो वैकल्पिकः, यथा—

संक्षिप्येत क्षणमिव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्णाभिः क्षतमशरणं त्वद्वियोगव्यथाभिः ॥ ९८

संवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयरूपो नैयोगिकः. स यथा—

तेनाष्टौ परिगमिताः समाः कथंचि-
द्बालत्वादवितथसूनृतेन सूनोः ।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥ ९९

तेऽमी त्रयोऽपि नित्यभेदाः. नित्यरूपेणैवानिवारितप्रवृत्तित्वात् । प्रातःप्रत्यूषप्राह्णमध्याह्नापराह्णसन्ध्यारूप औद्योगिकः. यथा—

शय्यन्ते हतशायिकाः पथि तरुच्छायानिषण्णाध्वगैः
श्रीकण्ठायतनेषु धार्मिकजनैरास्यन्त उष्ट्रासिकाः ।
शून्ये तेऽत्र निकुञ्जशायिनि सखि ग्रीष्मस्य मध्यन्दिने
सञ्जानां दयिताभिसारणविधौ रम्यः क्षणो वर्तते ॥ १००

निशामुखप्रदोषनिशीथापररात्रचन्द्रोदयचन्द्रास्तमयरूप औपभोगिको यथा—

विलिम्पत्येतस्मिन्मलयजरसार्द्रेण महसा
दिशां चक्रं चन्द्रे सुकृतमयि तस्या मृगदृशः ।
दृशोर्बाष्पः पाणौ वदनमसवः कण्ठकुहरे
हृदि त्वं ह्रीः पृष्ठे वचसि च गुणा एव भवतः ॥ १०१

शरद्धेमन्तशिशिरवसन्तग्रीष्मवर्षारूपः प्रायोगिको यथा—

इदमसुलभवस्तुप्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः क्षिणोति ।
किमुत मलयवातोन्मूलितापाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥ १०२

तेऽमी त्रयोऽपि नैमित्तिकभेदाः. नित्यत्वेऽप्येषामु (पभो) गादेर्निमित्तत्वात् मदप्रमदाभ्युदयोत्सवव्यसनपरिहारादिरूप आगन्तुर्यथा—

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि शनकैः ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहारा नववधूः ॥ १०३

बाल्यकौमारयौवनमौग्ध्यमाध्यस्थ्यप्रागल्भ्यरूपो नैसर्गिको यथा—

मा मूमुहत्खलु भवन्तमनन्यजन्मा
मा ते मलीमसविकारघना मतिर्भूत् ।
इत्यादि नन्विह निरर्थकमेव यस्मा-
त्कामश्च जृम्भितगुणो नवयौवनं च ॥ १०४

परापरयौगपद्यायौगपद्यचिरक्षिप्ररूपः सांसर्गिको यथा—

आदौ तावन्नयनगमनस्वागतादिक्रियास्ताः
पश्चादीषत्प्रहसितकथाभावसम्प्रेषितानि ।
भावेनान्तर्मनसि घटितः प्रीतिविस्रम्भयोगो
विस्रम्भात्तु प्रसरति शनैः सर्वगात्रेष्वनङ्गः ॥ १०५

तेऽमी त्रयोऽपि स्वाभाविकभेदाः स्वभावत एव प्रवर्तमानत्वात् । देश्यक्रीडाकेलिद्यूतव्रतगोष्ठीप्रेक्षादिरूपः सङ्कीर्णः, यथा—

सखि स विजितो वीणाद्यूते कयापि खलु स्त्रिया
पणितमभवत्तस्यां तस्मिन्निशाललितं ध्रुवम् ।
कथमितरथा शेफालीषु स्खलत्कुसुमास्वपि
स्थितवति नभोमध्ये त्विन्दौ प्रियेण विलम्ब्यते ॥ १०६

विविक्तदीर्घिकोद्यानसौधक्रीडादिदर्शनादिरूपः प्रकीर्णः, यथा—

पान्थ द्वारवतीं प्रयासि यदि हे तद्देवकीनन्दनो
वक्तव्यः स्मरमन्त्रमोहविवशा गोप्यो न नामोज्झितः ।
एताः केतकपुष्पधूलिपटलैरालोक्य रम्या दिशः
कालिन्दीतटभूमयोऽपि तव रे नो यान्ति चिन्तास्पदम् ॥ १०७

अष्टमीचन्द्रकेन्द्रोत्सवयक्षरात्रिककुन्दचतुर्थीसुवसन्तकमदनत्रयोदश्यादिरूपो विप्रकीर्णः, स यथा—

अस्मिन्वर्षमहे न वर्तत इदं यत्कामदेवोत्सवे
स्थेयं पुत्रि निरन्नया तदधुना किञ्चिन्मुखे दीयताम् ।
इत्युक्ते जरतीजनेन कथमप्यध्वन्यवध्वा ततः
पर्यस्तेऽहनि कल्पितश्च कबलो धौतश्च धाराश्रुभिः ॥ १०८

तेऽमी त्रयोऽपि वैपरामर्शिकभेदाः विपरामृश्य स्वेच्छया प्रवर्तमानत्वात् ।

स एव कालः कार्त्स्न्येन द्विरूप उपदर्शितः ।
क्रियापदैकवाच्योऽयं क्रियायाः साधनं च यः ॥
प्रत्ययार्थो ह्ययं चैतत्समवेतमुदाहृतम् ।
प्रकृत्यर्थानुरोधेन विप्रलम्भे चतुर्विधे ॥ १०९

यो विप्रलम्भः प्रथमानुरागो मानः प्रवासः करुणः स एव ।
साधर्म्यवैधर्म्यवशेन चैषामभेदभेदावथ तौ वदामः ॥

इति श्रीमहाराजाधिराजश्रीभोजदेवविरचिते
शृङ्गारप्रकाशे विप्रलम्भान्वर्थप्रकाशनो
नाम चतुर्विंशः प्रकाशः ॥



॥ श्रीः ॥

# ॥ परिशिष्टम् ॥

## ॥ विप्रलम्भशेषः ॥

---

यत्तन्नाम प्रस्तावितचरमुपोद्धाते भाण्डागारं तत्र अस्यैव शृङ्गारप्रकाशस्य आदिमषट्क-प्रतिच्छन्दान्तरं साधितमस्तीति, तच्च मातृकान्तरसंवादात् समीकृतमिति च प्रतीतिमारोपितमवागम्यत; तेनाप्यस्मदीयकोशस्य संवादं साधयितुं स एवाध्यक्षः पर्यनुयुक्तोऽभूत्। तेनोत्तरितं च यथा—"अनुयुज्यमानभागस्य मुद्रणानन्तरं शतं कोशाः निष्प्रतिक्रियं भाण्डागाराय यदि दीयेरन्; तर्हि उपरितनाधिकरणाधिपेन (Director) संयुज्य संवादायानुमतिं दापयितास्मि" इति। इदमेवोत्तरलेखमनूद्य निष्क्रियसंवादाभ्युपगमाय सोऽपि (Director) महाशयः प्रार्थितः। अथ सोऽपि अध्यक्षलेखमेवाभिन्नाक्षरार्थमन्ववदत्। तेनैतदुल्लेखपथं न खलु नाधिरोहति सुधियां, यदत्र परस्परमुपजापः सम्पन्न इति। अथ तमेतमेवार्थमधिकृत्य प्रेष्ठं राजाधिकरणमाभियोगः प्रापितः। तत उपांशु सञ्चारिते अधिकरणैकान्ते विचारे विद्याधिकारिणः (Director) अधिकरणात् पञ्चाशत्सङ्ख्यानिर्देशेन अवारोपितं मुद्रितपुस्तकप्रत्यर्पणम्। तदुत्तरत्वेन मठतः अननुमतौ प्रकाशितायां पुनश्च पञ्चविंशतिसङ्ख्यानिर्देशेन अन्ततो दशसङ्ख्यानिर्देशेन च लेखः प्राप्तः। नाद्यापि निगमः सम्पद्यते। तदेवं सार्वीये भाण्डागारे राजकीये पण्यपणनं सम्पन्नम्। तदेतदामूलचूडं शृङ्गारप्रकाशसंवादविप्रलम्भवृत्तान्तं परिशीलयन्तः निदानमस्य स्वयमेव दूरदर्शिनः अवगच्छेयुरित्यलम्॥

---

अत्र प्रबन्धे प्राकृतगाथानां नैकस्या अपि च्छाया लेशतोऽपि मातृकायां लिखिता। प्रत्युत अक्षरविपर्यासत्रुटिरुच्चावचसन्निवेशश्च बहुधास्ति। यथावगमं समीकृत्य च्छाया साधिता। तेनात्र स्खलितशोधनाकरनिरूपणच्छायाप्रदर्शनादि यदि सूचयेयुर्विपश्चितः केऽपि बहुदर्शिनः, तर्हि सप्रश्रयं तदधिगच्छन्तः परिशिष्टे संमुद्र्य प्रकाशयितास्महे।

प्राकृतगाथानामाकरविषये सप्तशतीति काव्यमालायां मुद्रितैका। अस्मत्तालकोशवर्तिनी अपरा। माधवयज्वव्याख्यातान्या। जर्मन्देशे तल्लिप्या मुद्रिता इतरा इति। वेमभूपालव्याकृतं गाथाशतकमन्यदिति च। काव्यप्रकाशाद्यलङ्कारग्रन्थेषु च काश्चन गाथा उदाहृताः। इति च साधनसम्पत्तिः। तथापि अत्र शृङ्गारप्रकाशे उदाहृतानां गाथानां बह्वीनां संवादो नैवोपलभ्यते।

## ॥ स्खलितशोधनं उल्लेखश्च ॥

| पृष्ठसङ्ख्या. | पद्यसङ्ख्या. | स्खलितप्रदेशः. | संस्कारशुद्धिः. |
|---|---|---|---|
| १ | | कु...रस्याभि | रुचिरस्याभिलाषस्य । |
| ४ | १० | धरिउं | धरिउं कह वि ण तीरइ हअदिट्ठी वळ्ळहेसु निपडंती । गाइव्व, (छाया) धर्तुं कथमपि न पार्यते हतदृष्टिर्वल्लभेषु निपतन्ती गौरिव... लुब्धा । |
| ५ | १२ | बाळाओ | बाळाओ होंति कोऊहळेण एमेअ चवळचित्ताओ । दरळसिअथणीसु पुणो णिवसइ मअरद्धअरहस्सं ॥ (छाया) बाला भवन्ति कौतूहलेन एवमेव चपलचित्ताः । दरलसितस्तनीषु पुनर्निवसति मकरध्वजरहस्यम् ॥ |
| ७ | २९ | का...क्खर | काळक्खरदूसिक्खिअ वाळअ रे एहि ळग्ग कंठम्मि । दोण्णि वि णरअणिवासो समअं जइ होइ ता होउ । (छाया) कालाक्षरदुःशिक्षित बालक रे एहि लग कण्ठे । द्वयोरपि नरकनिवासः समं यदि भवतु तद्भवतु । (तालकोशे अस्या द्वितीयपादे धम्मिअ रे णिंबकीडअसरिच्छ (छाया) धार्मिक रे निम्बकीटकसदृक्ष इति) । |
| ८ | ३१ | ता छिवइ | (उत्तरार्धे) कामोसवसीअळो । |
| ९ | ४१ | पिहिते कारागारे | पिहिते वासागारे (शेषं टिप्पण्यां समाहितम्) |
| १० | ४३ | तह तीए | (उत्तरार्धे) समअं जह विअसिअमोळ्ळिआइ जाआइ । अच्छीइ (छाया) समं यथा विकसितमुकुलिते जाते अक्षिणी । |

| पुटसङ्ख्या. | पद्यसङ्ख्या. | स्खलितप्रदेशः. | संस्कारशुद्धिः. |
|---|---|---|---|
| ११ | ५० | केळीगोत्त | ...वरस्स...रइं देइ (छाया) ...वरस्य ...रतिं ददाति । |
| १२ | ५५ | एएण व्विअ | (द्वितीयपादः) पज्जत्तं तेण माणुसे ळोए (चतुर्थपादः) किसेत्ति सव्वो (छाया) पर्याप्तं तेन मानुषे लोके । कृशेति सर्वः |
| १३ | ६० | अव्व उ | अव्वउ । |
| १४ | ६३ | गोळाणईण | गोळाणईए तूहे (छाया) गोदानद्यास्तीर्थे |
| १७ | ७७ | समपेम्मरसं | (चतुर्थपादः) समपुण्णेहिं जणो ळहइ । (छाया) समपुण्यैर्जनो लभते । |
| २० | ९० | सहसा मा | सहसा मा साहिप्पउ पिआअमो तीए विरहकिसिआए । अच्चंतपहरिसेण वि जा मआ सा मअ च्चेअ । (छाया) सहसा मा शाम्यतु प्रियागमस्तस्या विरहकृशायाः । अत्यन्तप्रहर्षेणापि या मृता सा अमृतैव (मा शाम्यतु मा सात्मीभवतु इति भावः) । |
| २० | ९२ | पत्तपओसो | (उत्तरार्धे) थोआवसेस (छाया) स्तोकावशेष |
| २२ | १०१ | पिअळं | (उत्तरार्धे) अहिधाविऊण छिप्पो बाळअ बाळाए धण्णोसि । (छाया) अभिधाव्य स्पृष्टो बालक बालया धन्योऽसि ॥ |
| २३ | १०७ | केणावि | (उत्तरार्धे अंहो आश्चर्ये दुःखे च निपातः अंबो इत्यपि पाठः) । |
| २६ | १२३ | णिद्दाविरामो | पुळोएइ (छाया) पश्यति । |
| ,, | १२४ | दिण्णतणु | (द्वितीयपादः) जुवइजणस्स दइअदट्ठतंबोट्ठाइं । (छाया) युवतिजनस्य दयितदष्टताम्रोष्ठानि । |
| २८ | १३३ | णिंदंतु | (उत्तरार्धे) बहुमग्गविणिम्मविआइ वेसविळअणहिअआइ । (छाया) बहुमार्गविनिर्मापितानि वेश्यास्त्रीणां हृदयानि (४९ पुटे इयमेव गाथा उदाहृता, उत्तरार्धे तु बहुरङ्गविनिर्मापितानि इति पाठः) । |

| पुटसङ्ख्या. | पद्यसङ्ख्या. | स्खलितप्रदेशः. | संस्कारशुद्धिः. |
|---|---|---|---|
| २९ | १३९ | खणमेत्तं | ण पिट्ठेइ (छाया) न भ्रश्यति । |
| ३० | १४२ | दरसुंदर | दरसुंदरमहुरुल्लाविरीए (छाया) दरसुन्दर-मधुरोल्लापिन्या |
| ३१ | १५० | अण्णं ळडह | अण्णं ळडहत्तणअं (छाया) अन्यद्वैदग्ध्यं (लडह-शब्दः संस्कृतेऽपि प्रयुज्यते कविभिः) । |
| ३२ | १५५ | वाउल्ल | वाहोल्लविअळिआणं (छाया) बाष्पार्द्रविगलि-तानां, रहसोत्ताणणिच्चलच्छो (छाया) रभ-सोत्ताननिश्चलाक्षः । |
| ३४ | १६२ | दिअरो | दिअरोपरि णिहइ । |
| ३६ | १७५ | खिप्पइ | उक्खिप्पइ मारुअमंडळेण गेहंगणाए वाहीए । सोहग्गधअपडाए व उव धणुरोरुंफरिंछोळी । (छाया) उत्क्षिप्यते मारुतमण्डलेन गेहाङ्गणा-व्याध्याः । सौभाग्यध्वजपताकेव पश्य धनु-स्त्वक्परम्परा । (अत्र तुरीये पादे पाठभेदो-ऽस्ति, यथा — सोहग्गधअपडाअं व उवह धणुरुंपरिंछोळी इति, इयान्विशेषः । आद्य-पाठे उव पश्य, रोरुंफः धनुस्त्वक्, द्वितीये उवह पश्यत, रुम्पः इति) । |
| ४० | १९७ | पणअ | पणअक्खळणासंका |
| ४१ | २०३ | दट्ठुं चिरं | (अस्या गाथायाः पूर्वार्धे पाठभेदः । माधवयज्व-व्याख्यातायां सप्तशत्यामेवं दृश्यते, सरहस-विणिग्गआए वि अत्ता अंतो ? मए ण लक्ख-विओ । सीसाहअ वळिअ (छाया) सरभस-विनिर्गतयापि पितृष्वसः मया न लक्षितः । शीर्षाहतवलित इति) |
| ४२ | २०८ | तद्दिअह | अणुदिअहकआहोआ (छाया) अनुदिवसकृता-भोगौ । पिणंति (छाया) निर्यातः । |
| ४३ | २११ | घरिणीए | घरणीए अकअळंबं चडुअम्मं पिअअमे (छाया) गृहिण्याः...चाटुकर्म प्रियतमे । |

| पुटसङ्ख्या. | पद्यसङ्ख्या. | स्खलितप्रदेशः. | संस्कारशुद्धिः. |
|---|---|---|---|
| ५७ | २० | अप्पत्तदंसअत्तं | अप्पत्तदंसउत्तंमरीए । |
| ६२ | ४७ | सामसाहिप्प-हिप्प म | (इयं गाथा २० पुटस्थ ९० तमगाथाशोधनावसरे परिष्कृता) । |
| ६४ | ५५ | इन्दुर्यत्र | (तृतीयपादे) स्वाधीनामनुकूलिनीमिति च पाठः। |
| ६७ | ६८ | यस्मिंश्चिर | (तृतीयपादे) तत्रैव दुश्चरितमद्य निवेदयन्ती (चतुर्थपादे) ह्रीणासि पापहृदये न |
| ,, | ७० | णकओ वाह | (तृतीयपादे) तीए णवरं पिअअमो गओ त्ति । (छाया) तस्याः केवलं प्रियतमो गत इति । |
| ७३ | ९७ | न्यक्कारो | (तृतीयपादे) शोकस्तातविपत्ति |
| ८४ | ३० | उअहुज्जंति | उअ हुज्जंति पिउच्छा ए ? (छाया) पश्य ...पितृष्वसः ...यानि प्रियसङ्गमे सौख्यानि । तानि विरहेण...गलितानि क्रियन्ते । |

उपोद्धाते ।

XVI. त्रयोविंशे प्रकाशे अन्ते—

स्वभावविपरामर्शैः सन्निकर्षोदयो द्विधा ।
अव्यवस्थाव्यवस्थाभिर्द्वेधा व्यतिकरक्रमः ॥
प्रायः पूर्वानुरागादौ व्यवस्थानस्वभावयोः ।
नित्यादावव्यवस्थानविपरामर्शयोः श्रुतिः ॥
दिङ्मात्रमेतदुदितं प्रथमानुराग-
मानप्रवासकरुणैस्तदनन्तराणाम् ।
भूयश्च रूपमखिलं खलु विप्रलम्भ-
सम्भोगयोरनतिविस्तरतो वदामः ॥

इति श्री + इत्यादिनिगमनगद्यं मातृकायां न दृष्टम् ॥

XXII. के वैकटनितम्बेनेति पद्यानन्तरं अनुभयापेक्षा यथा—

पृष्टः काले वदति स माषं तद्विपरीतं सस्यमरण्ये ।
लुम्पति चोष्ठे रं वा षं वा तस्मै दत्ता विकटनितम्बा ॥

XXIV. "ध्वस्तैरौदरिकैः" इति पद्यस्य टिप्पण्यां सूर्याभिमुख्ये सूरीणां सूर्यस्य वा, परमं भोजप्रबन्धं परं अम्भोजप्रबन्धं, सान्द्रामोदं आमोद आनन्दः, परिमलश्च, प्रकाशस्य तन्नाम्नोऽस्य ग्रन्थस्य, आलोकस्य ।

भोजदेवविरचिते शृङ्गारप्रकाशे द्वाविंशत्रयोविंशचतुर्विंशप्रकाशेषु त्रिषु उदाहृतानां संस्कृतपद्यानां आदिवर्णानुक्रमाणिका ।

| पुट. | पद्य. | पद्यानामाद्यक्षराणि. | आकरः |
| --- | --- | --- | --- |
| ८६ | ३८ | तीव्राभिषङ्गप्रभवेन | कुमारसंभवे |
| ८५ | ३६ | तेनाष्टौ परिगमिताः | रघुवंशे |
| | | **द** | |
| ८६ | ४१ | दर्भाङ्कुरेण चरणः | शाकुन्तले |
| ८५ | ३५ | दलति हृदयं | मालतीमाधवे |
| ६७ | ६९ | दिष्ट्यार्धश्रुत | वेणीसंहारे |
| ८२ | २० | दूरादुत्सुक | अमरुशतके |
| ८४ | २७ | दूरे प्रियतमः | कादम्बरीकथासारे |
| ३४<br>६२ | १६३<br>४५ | दृष्टा दृष्टिमधो | रत्नावल्यां |
| ४८ | २३३ | दृष्टिं हे प्रतिवेशिनि | |
| ६२ | ४३ | दृष्टिर्वन्दनमालिका | अमरुशतके |
| ६१ | ३९ | देशैरन्तरिता | ,, |
| ८६ | ३७ | देव्या शून्यस्य जगतः | उत्तरचरिते |
| | | **ध** | |
| १६ | ७३ | धन्याः स्थ याः कथयथ | |
| ५६ | १४ | धारानिपात | |
| ८० | ९ | धुतिरस्तमिता | कुमारसंभवे |
| | | **न** | |
| २ | | न किञ्चिदपि कुर्वाणः | उत्तरचरिते |
| १३ | ७० | न वेद्मि स प्रार्थित | कुमारसंभवे |
| ६२ | ४४ | न स्पृष्टोऽपि त्रिदिव | |
| ५५ | ११ | निद्राविनोदित | किराते |
| २३ | १०४ | निर्यता परिजनेन | माघे |
| ४९ | २४० | निषसाद निशीथ | |
| ७१ | ९२ | नैराश्यकातर | मालतीमाधवे |
| ७३ | ९७ | न्यक्कारो ह्ययमेव | महावीरचरिते |

* ७३-९९ अत्र ' यातो विक्रमबाहुः ' इति पाठः ।

| पुट. | पद्य. | पद्यनामाद्यक्षराणि. | आकरः. |
|---|---|---|---|
| २ | | शून्यमाकीर्णतां | किराते |
| ६९ | ६० | शैलस्तोऽयं ककुभ | उत्तरचरिते |

# स

| पुट. | पद्य. | पद्यनामाद्यक्षराणि. | आकरः. |
|---|---|---|---|
| १ | | सङ्कल्परमणीयस्य | |
| १०० | ९८ | सङ्क्षिप्येत क्षणमिव | मेघसन्देशे |
| १०२ | १०६ | सखि स विजितो | |
| ९१ | ९७ | सञ्चारिणी दीप | रघुवंशे |
| ९ | १८ | सज्जनां विरचना | किराते |
| ७ | २७ | सन्तापसन्तति | मालतीमाधवे |
| ८<br>७८ | ३६<br>१ | समानप्रेमाणं | ,, |
| ३७ | १७७ | समानसीं मेरु | कुमारसंभवे |
| १६<br>९० | ७४<br>९४ | स्थाने तपो दुश्चरं | ,, |
| ३६ | १७६ | स्नाता तिष्ठति | दशरूपके धृतं |
| ७९ | ७ | सुहृदिव प्रकटय्य | उत्तरचरिते |
| ४८ | २२९ | स्फुटनाभितला | |
| ७८ | ३ | सोद्वेगस्य स्खलित | वेणीसंहारे |

# ह

| पुट. | पद्य. | पद्यनामाद्यक्षराणि. | आकरः. |
|---|---|---|---|
| ९४ | ६७ | हृदयान्नापयातोऽसि | रामचरिते |
| ८९ | ३३ | हृदये वससीति | कुमारसंभवे |

---

अत्र प्रकाशत्रये कालिदासादिचिरन्तनकवीनां प्रबन्धेभ्यो बहूनि पद्यानि उदाहरणतया निदर्शितानि । अत्रत्यपाठस्य अद्यतनोपलभ्यमानतत्तदाकरपाठस्य च कचित्कचित् भेदोदृश्यते, सुधियो विभावयन्तु ।

किञ्च यथादृष्टमाकरनिर्देशः कृतः । अदृष्टाकराणि बहूनि पद्यानि सुभाषितावलि शार्ङ्गधरपद्धति सूक्तिमुक्तावलि कवीन्द्रवचनसमुच्चयादिषु एतद्ग्रन्थकारतोऽर्वाक्तनैः सङ्कलितेषु समवेक्ष्यन्ते । तदाकरनिर्देशो न प्राचीनत्वसाधक इति नात्र कृतः ।

इदमत्र प्रार्थ्यते । अत्र अज्ञाताकराणां विपर्यस्ताकराणा च आकरनिर्देशेन अशुद्धक्षर इत्यादीनां समीकरणेन उद्यममिमं समुत्तम्भयेयुः कृपया सहृदयाः सङ्ख्यावन्त इति''

|| श्रीः ||



---

स-मु. इत्यस्य सप्तशती मुद्रिता, इति. स-ता. इत्यस्य सप्तशती तालकोश, इति. वे. इत्यस्य वेमभूपालसङ्कलिता, इति. माधव. इत्यस्य माधवयज्वव्या-ख्याता सप्तशतीति च सङ्केतः ||

| पुट. | गाधा. | प्राकृतगाथानामनुक्रमणिका. | आकरः. |
|---|---|---|---|
| ३९ | १९० | एक्कंगणसुळहे | |
| १२ | ५३ | एक्कं पहरुव्विण्णं | स-मु. १-८६ |
| ३ | २ | एक्केक्कमसंदेसा | स-मु. ४-४२ |
| ३० | १४५ | एइहमेत्तम्मि | स-मु. ४-३ |
| ३८ | १८१ | एमेअ अकअ | स-ता. ४-७७ |
| ३५ | १७० | एहिइ पिओ त्ति | |
| | | **ओ** | |
| २२ | १०३ | ओळोइअंमि | |
| | | **क** | |
| ५८<br>७१ | २३<br>८७ | कइ आगओ पिओ | |
| २४ | ११० | करिकलभकुम्भ | स-मु. ३-५८ |
| ४ | ८ | कस्स करो बहु | स-मु. ६-७५ |
| १९ | ८६ | कस्स ण सद्दा गरुई | स-ता. ६-११ |
| ५६ | १५ | कळहोळोज्जळ | |
| २०<br>६४ | ८९<br>५३ | कक्कं किर खर | स-मु. १-४६ |
| ५० | २४९ | काऊण धीर जहणं | |
| ३१ | १४७ | काणअरूणा | |
| २२ | १०० | कारणगहिअं पि | स-ता. ६-९८ |
| ७ | २५ | कालक्खरदूसिक्खिअ | स-ता. ५-३५ |
| २५ | ११८ | किअरहस्सदो | |
| ५<br>७० | १३<br>८६ | किंकिं दे पडिभाअइ | स-मु. ३-१५ |
| ४१ | २०१ | किं ण भणिओ सि | |
| ४८ | २३४ | किं णीळकंठ | |
| ५६ | १७ | किं तस्स पावरेणं | स-ता. ७-१०० |
| ३६<br>९२ | १७४<br>६२ | कुविआ अ सच्च | सर्वसेनकृते हरिविजये |

| पुट. | गाथा. | प्राकृतगाथानामनुक्रमणिका. | आकरः. |
|---|---|---|---|
| २६ | १२१ | कुविआओ पसण्णाओ | ध्वन्यालोके प्रथमोद्द्योते |
| २३ | १०७ | केणासि अज्ज | |
| १४ | ६२ | केळीगब्भसरिच्छे | |
| ११ | ५० | केळीगोत्तक्खळणे | |
| ६९ | ८१ | | |
| | | **ख** | |
| २९ | १३९ | खणमेत्तं पि ण | स-मु. २-८३ |
| ११ | ४७ | खिण्णस्स उरे पइणो | स-मु. ३-९९ |
| ५९ | २८ | खेमं खेत्तो खेमं | स-मु. ५-९९ |
| | | **ग** | |
| ११ | ४९ | गज्ज मह च्चिअ | स-मु. ६-६६ |
| ६ | २० | गहइ कंठंमि बळा | |
| २६ | १२२ | गामतरुणीओ | स-मु. ६-४५ |
| ५९ | २९ | गिम्हं गमेइ कह वि | स-मु. १-७० |
| ३ | ३ | गेण्हह पळोअह | स-मु. २-१०० |
| १४ | ६३ | गोळाणईए तूहे | स-मु. २-७१ |
| ७१ | २०२ | ....गिळुकविआ | |
| | | **घ** | |
| ४ | ७ | घडिऊरुसंपुडं | |
| ४९ | २३९ | घरसामिअस्स | |
| ८ | ३४ | घरणीघणथण | स-मु. ३-६१ |
| ४३ | २११ | घरणीए अकअळ | |
| ५५ | १० | घेत्तुं मुंचइ | |
| | | **च** | |
| ३१ | १४९ | चंदसरिसं मुहं | स-मु. ३-१३ |
| २१ | ९६ | चंदुज्जोएण मओ | सेतौ १०-८१ |
| ४३ | २०९ | चंपहइ वीअ | |
| ४२ | २०४ | चुंबइ वासिण्ण | |

| पृष्ठ. | गाथा. | प्राकृतगाथानामनुक्रमणिका. | आकरः. |
|---|---|---|---|
| ४० | १९२ | चूडसुगओ विवण्णो | स-मु. ६-४९ |
| २१ | ९५ | चोरिअरअसद्दा | स-मु. ५-१५ |
| | | **छ** | |
| २९ | १३७ | छणपिट्ठधूसर | स-ता. २-३५ |
| | | **ज** | |
| ६५ | ५७ | जत्थ ण उज्जागिरओ | स-ता. २-७१ |
| ९२ | ६१ | | |
| ३२ | १५६ | जस्स जहिं चिअ | स-मु. ३-३४ |
| ४४ | २१५ | जह जह जरा | स-मु. ३-९३ |
| २८ | १३१ | जह जह वि कामिणीणं | |
| ४ | ९ | जं चिअ पिआण | |
| ३ | ४ | जं जं सो णिज्झाअइ | स-मु. १-७३ |
| २५ | ११३ | जं तं रूपं णं तं | |
| २० | ८८ | जं मुच्छिआए ण | स-ता. ३-४४ |
| २९ | १४० | जाइ वअणाइं | स-मु. ७-४१ |
| २९ | १३६ | जाणइ जाणावेउं | स-मु. १-८८ |
| ७० | ८३ | | |
| ८ | ३५ | जाणामि जणो णिउ णो | |
| ४१ | २०० | | |
| ६८ | ७४ | जाव अ ण देहि | |
| २३ | १०५ | जज्जं तिज्जं तेहिं | |
| | | **झ** | |
| ११ | ४८ | झत्ति समुट्ठिअ | |
| | | **ण** | |
| ४३ | २१० | णअणाण हरणो | |
| ६७ | ७० | ण कओ बाहविमोक्खो | सेतौ ११-५६ |
| २९ | १३८ | णाचिहिइ णडो | |
| १० | ४६ | णवबहुपेम्म | स-मु. २-२२ |

# परिशिष्टशेष :

अनुरागप्रस्तारसंग्रह :--

प्रथमं अनुराग: ६४ चतुष्षष्टिप्रकार: अभिलाषादिभेदात् । ते च भेदा एकैकश: अष्टधा भिद्यन्ते । तेऽपिच प्रत्येकं चतुर्विंशतिधा भवन्ति । एवमेकस्यप्रधान भेदस्य अभिलाषादे: अवान्तरभेदा: द्विनवत्युत्तरमेकशतम् ॥

अत्र भेदचतुष्षष्टौ आद्यस्य अभिलाषस्यैकस्यैव सोदाहरणं निरूपणमस्मिन्प्रकाशे प्रपंचितं. अवशिष्टाया भेदत्रिषष्टे: प्रधानस्वरूपोदाहरणं केवलं निदर्शितं . तदवांतरभेदास्तु सुधीभि: स्वयमेवोहनीया इति ग्रन्थकारस्याशय इति ज्ञायते ॥ अभिलाष: एक: तदवांतरभेदा: १९२ आहत्य त्रिनवत्युत्तरं शतं. आकांक्षादिभेदत्रिषष्ट्या योगे २५६ षट्पंचाशदधिका द्विशती भवति. अस्यास्समग्राया उदाहरणपद्यानि प्रदर्शितानि । तानि २५६ गण्यंते. तत्र प्रधानचतुष्षष्टौ ५–६–७ पञ्चम षष्ठ सप्तमानां ईप्सा, लिप्सा, इच्छा, इति तिसृणामुदाहरणपद्यानि गलितानि. अभिलाषस्य अवान्तरप्रभेदोदाहरणेषु १–४–२० ( पुट ३२ ) इत्यस्य च उदाहरणपद्यं गलितं । एवमुदाहरणपद्यचतुष्टयं लुप्तं । अवशिष्टानि २५२ द्विपञ्चाशदुत्तरद्विशतं पद्यानि वर्तंते ॥



# स्खलितशोधनशेषः

५७–टिप्पण्यां १३–पंक्तौ " इदमन्यदत्रावधेयम् " इत्यनन्तरं योजनीयं वाक्यं यथा " ऊहसि पिआए समअं वइक्लोवि अज्ञाइ " इतीयं गाथा अर्थानुरोधेन सामान्याविषयस्य उदाहरणं भवितुमर्हति. '' मण्णुभरिआणरोआइ संदिसइ सिआन्ति '' इत्यस्य उत्तरार्धं यद्यपि न लभ्यते । तथापि तावन्मात्रार्थसामञ्जस्येन उत्तमाविषयस्य उदाहरणाय कल्पते इति ॥

६७–१ अत्र उदाहरणपद्यस्य उत्तरार्धं त्रुटितं. अनन्तरञ्च महान्ग्रन्थपातो दृश्यते । त्रुटेरनुपदमेव......यथा '' एकस्मिन्शयने मया मयसुतां " इति पद्यं कस्यचित्प्रभेदस्य उदाहरणतया दत्तमस्ति. तस्य प्रभेदस्य नामाक्षरस्थाने त्रुटिरस्ति. अथ " तमःप्रकृतेःकनिष्ठस्य विप्रलम्भे अनुभावसम्पद्यथा यस्मिंश्चिरप्रणय " इत्याद्युपरितनग्रन्थस्समस्ति । यद्यपि त्रुटितभागे कति विषयाः केके वा प्रतिपादिता इति निश्चेतुं न पार्यते. तथापि इयती काप्येवं सम्भावना समुन्मीलति. यथा उत्तरत्र तमःप्रकृते॰कनिष्ठस्य विप्रलम्भे सम्भोगे च अनुभावसम्पदः उदाहरणदर्शनात्, तत्पूर्वं सत्वरजःप्रकृत्योः उत्तममध्यमयोः नायकयोः विप्रलम्भे सम्भोगे च अनुभावसम्पदः उदाहरणेन भाव्यमिति । यच्चान्यत्त्रुटेरनुपदं एकस्मिन् शयने " इत्युदाहरणपद्यं दृश्यते. तत्तु रजःप्रकृतेर्मध्यमस्य सम्भोगे अनुभावसम्पदः उदाहरणमिति साधीयसी दृष्टिः ।

६८–५ धीरकनिष्ठाया विप्रलम्भे सम्भोगे च
[ उदाहरणं गलितं मातृकायाम् ]

## शुद्धाशुद्धि ।

| पृष्ठे | पंक्तौ | शुद्धम् |
|---|---|---|
| १३ | १० | अष्टधा सम्भवति । |
| १७ | १९ | दत्वात्मजां भवतु निर्वृतिमान |

| | | |
|---|---|---|
| २० टि | ५ | क्षीयते वचनम् । |
| २१ टि | १ | गलति च निर्विण्ण |
| २२ | १७ | ओलोइअम्मि तुलिअं पिआहि. |
| २२ टी | ६ | अवलोकिते तुलितं । चकृतं पदे संहृत |
| २३ | ५ | झिज्झंति झिजंतेहिं । |
| २३ | ११ | केणावि अज्जगोसे कंपिमणे |
| २३ टि | १ | क्षीयन्ते क्षीयमाणै. । |
| ,, टी | ३ | प्रभाते कामपि मनसि. अस्माकं मदन |
| ३२ | ३ | महिलाअणं रमंतस्स |
| ३२ टि | २ | महिलाजनं रममाणस्य । |
| ४० | ७ | णहुम्मिआपंथिओ |
| ४५ | २२ | संस्तुत ( अथवा ) संस्मृत. |
| ४९ टी | ३ | हला वक्ष्ये । |
| ५१ | १४ | पश्यन्प्रथममभिलाप |
| ५३ | ७ | सम्बन्धजन्माद्रव्यगोचराद्गुण |
| ५५ | ९ | सुरआयवीसामो । |
| ५५ टि | ३ | गृहीतुमुच्यते अधरः सुरताय विश्राम: |
| ५५ | १५ | १·१२·१ सर्वर्तुचर्याविषयेषु वसन्तचर्याविषयो यथा ( उत्तरत्र ग्रीष्मादिनिर्देशेषु १·१२-२ इत्याद्यंकनिर्देशो भाव्यः ) |
| ६० | २० | निरनुरोधे ननु वयं । |
| ६१ | १५ | करभस्य केसर |
| ,, | २३ | प्रारम्भेह्न . श्रिया |
| ६३ | १९ | (यो रेखैव) |
| ६५ | २० | तं तावदा । |
| ७४ | १३ | तेषां नित्यादि |
| ८४ | २० | उअहुज्जन्ति पि उच्छा |
| ,, टि | २ | पश्य भवन्ति सखि यानिप्रियसङ्गमे सौख्यानि |

| | | |
|---|---|---|
| | | तानि विरहेण...गलितानि क्रियन्ते । |
| ८९ | १३ | प्रार्थनादिभिर्यो भयगतो विशेष : राजते दीप्यते समुद्योतते परं |
| ,, | १७ | विभक्तेव मनोभवेन |
| ,, | १९ | यदा अनुरागशब्दस्य पश्चादर्धेन अनुमा |
| ९० | ८ | यदापुनरनुगतेनार्धेनानुना |
| ९६ | ४ | निपतन्ति नूतनघनान् |
| ९३ | २४ | चामीकररुचो : |



## ॥ स्खलितशोधनपरिशिष्टम् ॥

| पुट. | पद्य. | | |
|---|---|---|---|
| २३ | १०५ | छिज्जंति | छिज्जंति छिंजतेहिं (छाया) क्षीयन्ते क्षीयमाणैः |
| २३ | १०७ | केणासि | केणवि अज्ज गोसे कं पि मणे (उत्तरार्धे) अम्हं मअण (छाया) केनाप्यद्य प्रातः कामपि मनसि । अस्माकं मदन |
| ८९ | पङ्क्ति १३ | प्रार्थनादिर्वो | प्रार्थनादिभिर्वोभयगतो विशेषः । राजते दीप्यते समुद्द्योतते परं |
| ,, | ,, १९ | यादा | पश्चादर्थेनानुना |
| ,, | पद्यं ५० | अभूद्व | विभक्तेव मनोभवेन |
| ९० | पङ्क्ति ८ | यदा | अनुगतार्थेनानुना |
| ९६ | पद्यं ७७ | किञ्चिन्मुद्रित | (तृतीयपादे) नूतनघनात् |
| ,, | ८१ | कुचद्वन्द्वे | ,, चामीकररुचोः |